# Remnants of Buddhist Heritage







मौर्य-सम्राट अशोकः ख्रीस्तपूर्ण तृतीय शतके भुवनेश्वर समीपे दया नाम्नी नदी तीरे कलिङ्गयुद्ध समये प्रवाहित रक्त-प्रवाहं दृष्ट्वा चण्डाशोकात धर्माशोकः संवृतः। तत्कालीन तस्य बौद्ध मतावलम्बनेन तन्मतं न केवलं उत्कलप्रदेशे, अपितु भारतस्य अन्येषु प्रान्तेषु तथा चीन, जापान, श्रीलङ्का प्रभृति देशेष्वपि विस्तारितम्। भुवनेश्वरात् अष्ट-कि.मी.-दूरे विद्यमानाः धौलि-शिललेखाः तस्य हृदयपरिवर्तनस्य मूकसाक्षी रूपेण विराजन्ते, एतस्य स्मारकतया भारत-जापान देशयोः सहयोगेन एकः शान्तिस्तूपः अत्र निर्मितः।

अन्यच्च, कटक-नगरात् सप्तति कि.मी. दूरे विराजिताः उदयगिरि-रत्नगिरि-ललितगिरयः तथा पार्श्वस्थ लङ्गुडि, कयमा प्रभृति गिरीणां समीपे भूमिखननेन तदानीन्तन अतीव आश्चर्यजनकाः अंशावशेषाः लोकगोचरं आगताः एते गिरयः कस्यचन बौद्धविहारस्य आधारभूताः आसन्, यश्च पुष्पगिरि नामकस्य बौद्ध-विश्वविद्यालयस्य ध्वंसावशेषः स्यादिति चीन पारिव्राजकः हुएन्-सां महोदया लिखित यात्राविवरणी सूचनात् ज्ञायते।

**Orissa**
**The Soul of India**





**For more information contact:** Director, Tourism, Paryatan Bhavan, Bhubaneswar-751014, Orissa, India
Tel. (0674) 432177, Fax: (0674) 430887, e-mail ortour@sancharnet.in, website www.orissa-tourism.com
Tourist Offices at: **Chennai:** Govt. of Orissa, Tourist Office, Tamilnadu Tourism Complex,
Ground Floor, Near Kalaivanar Arangam, Wallajah Road, Chennai-600002, Tel. 6360891
**Calcutta:** Utkal Bhawan, 55, Lenin Sarani, Pin-700013, Tel: (033) 2443653
**New Delhi:** Utkalika, B/4 Baba Kharak Singh Marg, Pin - 110001, Telefax (011) 3364580



# एतस्य अङ्कस्य विशेषाः

सम्पुटः - १८ नवम्बर् - २००१ सञ्चिका - ८

















## अन्तरङ्गम्






**SUBSCRIPTION**

**For USA and Canada**
**Single copy $2**
**Annual subscription $20**
***Remittances in favour of Chandmama India Ltd.***
to
**Subscription Division**
CHANDAMAMA INDIA LIMITED
No. 82, Defence Officers Colony
Ekkatuthangal, Chennai - 600 097
E-mail : subscription@chandamama.org

**उपायनीक्रियताम्**

वायुयानेन भारतेतरदेशान् प्रति
वार्षिकं (१२ सञ्चिकाः) - रू.९००/-
भारते रू.१२०/- (बुकपोस्ट् द्वारा)
भवदीयं धनं D.D. द्वारा धनादेश (M.O.) द्वारा वा
'चंदामामा इंडिया लिमिटेड'
नाम्ना प्रेषणीयम् ।

विज्ञापिकादानार्थं सम्पर्क्यताम् -
चेन्नै -
Ph - 044-2347384, 2347399
e-mail : advertisements@chandamama.org
देहली -
मोना भाटिया
Ph - 011-6515111/ 6565513/6565516
मुम्बयी -
शकीलमुल्ला
Mobile - 98203-02880
Ph - 022-2661599/ 2661946/2653057

संस्थापकौ –
चक्रपाणिः नागिरेड्डी च

# विशेषाङ्कः कश्चन मन्दहसितवतां कृते ....

नवम्बर्मासं यदा स्मरामः तदा वयं बालदिनम् अपि स्मरामः एव । प्रथमप्रधानमन्त्रिणः जवहरलालनेहरुवर्यस्य जन्मदिनम् आलक्ष्य १९५० तमवर्षात् वयं नवम्बर्मासस्य १४ दिनाङ्के बालदिनम् आचरन्तः स्मः ।

बालदिनविषये चर्चा ततः पूर्वम् अपि आसीत् एव । संयुक्तराष्ट्राणां सामान्यसभायां निर्णीतम् आसीत् यत् सर्वाणि सदस्यराष्ट्राणि बालहितकार्याणां वर्धनार्थं बालदिनम् आचरेयुः समानदिने इति । एषा घटना प्रवृत्ता १९५४ तमे वर्षे । १९५९ तमवर्षस्य नवम्बर्मासस्य २० तमे दिनाङ्के तया सभया बालाधिकारनिर्णयघोषणा पुरस्कृता । ततः 'युनिसेफ्' (UNICEF) संस्थया प्रस्तावः पारितः यत् नवम्बर्मासस्य २० तमः दिनाङ्कः बालदिनत्वेन आचरणीयः इति ।

अतः नवम्बर्मासः यदा उपस्थितः भवति तदा विकसितमुखान् बालान् वयं स्मरामो हि ।

नवम्बर्मासस्य अपरः विशेषः नाम तस्मिन् मासे सर्वप्रिया दीपावली अपि सम्भवति, या च जीवने नवोत्साहं कल्पयति । अन्यवर्षेषु यावत् ततोऽपि अधिकम् आनन्दं बहूनां बालानां हृदयेषु जनयति एतत् वर्षम् इति वयं विश्वसिमः । यतः स्फोटिकानिर्मातृसङ्घेन घोषितम् अस्ति यत् अपायकरेषु स्फोटिका-निर्माणकार्येषु इतःपरं बालानाम् उपयोगः न करिष्यते इति । ये बालाधिकारसमर्थकाः सन्ति तेषां कृते एषा हर्षावहा वार्ता ।

बालवाचकानाम् आनन्दवर्धनार्थं चन्दमामा सदा प्रयत्नरता । एषा नवम्बर्सञ्चिका बालविशेषाङ्कत्वेन प्रकाश्यमाना अस्ति गतात् वर्षद्वयात् । अत्र च भवन्ति बालैः एव रचिताः कथाः चित्राणि च ।

आरोग्यकरवर्धनार्थम् आहार-वस्त्र-वास-वात्सल्य-शिक्षणादयः यथा तथैव सर्जनात्मकशक्तेः आविष्कारार्थम् अवकाशः अपि आवश्यकः इति तु चन्दमामायाः दृढः विश्वासः । चन्दमामायाः एषः नवम्बर्मासीयः बालविशेषाङ्कः तम् एतम् आशयं पोषयति । बालप्रतिभायाः प्रकाशनार्थम् अवकाशं च कल्पयति ।



सम्पादकः – विश्वम्

*भारतनायकस्पर्धायां भागम् ऊढ्वा प्राप्नुवन्तु अपूर्वाणि पारितोषिकाणि*

# भारतीयाः नायकाः-२

भवन्तः क्रीडाप्रियाः । एवं ननु ? भवत्प्रीतिपात्राणि भारतीयक्रीडापटून् अधिकृत्य केचन प्रश्नाः सन्ति अत्र ।

**समुचितोत्तरदातारः त्रयः पुरस्क्रियन्ते द्विचक्रिकादानेन**

1 सः १९३२तमे वर्षे लासएञ्जलिस्नगरे प्रवृत्तायाम् ओलम्पिकक्रीडायां हाकीस्पर्धायाः नायकत्वं वहन् स्वर्णपदकप्राप्तेः कारणं जातः । सः १९२६-१९४८ वर्षयोः मध्यकाले सहस्राधिकानि 'गोलस्' सम्पादितवान् । सः कः ? ......................................

2 यः पूर्वं जूनियर् विम्बल्डन् चाम्पियन् आसीत् सः इदानीं जयशीले टेन्नीस्युगले अन्यतमः जातः अस्ति । कः सः ? ......................................

3 ऐदम्प्राथम्येन सहस्राधिकधावनानि(Runs) प्राप्तवान् 'लिटल् मास्टर्' इति ख्यातिं गतः सः क्रिकेट्क्रीडापटुः कः ? ......................................

4 चतुरङ्गक्रीडायां विश्वे अद्वितीयः सः । सर्वे भारतीयाः तं जानन्ति एव । भवान् अपि जानीयात् खलु ? कः सः ? ......................................

5 सः १९००तमे वर्षे 'आल् इंग्लेण्ड् ब्याड्मिण्टन्चाम्पियन्शिप् 'स्पर्धायां जयं प्राप्य विश्वस्तरीये ब्याड्मिण्टन्क्षेत्रे भारतस्य प्रवेशं कारितवान् । सः तत्क्षेत्रे नव वर्षाणि यावत् नैरन्तर्येण सर्वविजेता (चाम्पियन्) आसीत् । सः कः ? ......................................

प्रतिप्रश्नम् उत्तरं लिखन्तु । एतेषु पञ्चसु नायकेषु प्रियतमः कः किमर्थं च इति दशभिः शब्दैः लिखन्तु । **मम प्रियतमः नायकः** ......................................

भागग्रहीतुः नाम ......................................

वयः ...................... कक्ष्या ......................

सङ्केतः ......................................

पिन् ...................... दूरवाणी ......................

एतं पुटं पृथक्कृत्य प्रेषयन्तु अधोनिर्दिष्टसङ्केताय -

**भारतनायकस्पर्धा-२**
चन्दमामा इण्डिया लिमिटेड्,
८२, डिफेन्स् आफीसर्स् कालोनी
एक्काटुतङ्गल्, चेन्नै - ६०००९७

उत्तरप्रेषणाय अन्तिमदिनाङ्कः - ५ डिसेम्बर् - २००१

*नियमाः -*

१. अधिकाधि-ऊनचतुर्दशवर्षीयाः एतस्यां स्पर्धायां भागं ग्रहीतुम् अर्हन्ति ।
२. विविधभाषाभिः प्रेषितानि उत्तराणि परिशील्य त्रयः श्रेष्ठाः चीयन्ते । यदि योग्योत्तरदातारः बहवः तर्हि प्रियतमनायकविषये लिखितं वाक्यम् अवलम्ब्य चयनं क्रियते ।
३. निर्णायकानां निर्णयः एव अन्तिमः ।
४. एतं विषयम् अधिकृत्य पत्रव्यवहारः कोऽपि न करणीयः ।
५. विजेतारः पत्रद्वारा सूच्यन्ते ।

**भवद्भ्यः पारितोषिकं ददाति**





# अज्ञानस्य विमुक्तिः

रामपुरे रणधीरः नाम कृषिकः निवसति स्म । तस्य अल्पा कृषिभूमिः आसीत् । तत्र श्रमेण कृषिं कुर्वन् तृप्त्या जीवनं यापयति स्म सः ।

एकदा रायगढात् रणधीरस्य श्वशुरः गोविन्दः दुग्धदात्रीम् एकाम् उत्तमां महिषीं क्रीतवान् ।

सः जामातरम् अवदत् - ''बहु सम्यक् कृषिं करोति भवान् । यदि गृहे दुग्धदात्री महिषी अपि काचित् स्यात् तर्हि वरं भवेत् । महिषीपालनं तु कृषिवृत्तेः पोषकम् एव । क्षीरादिप्राप्त्या भवतः गृहस्थितिः अपि उत्तमा भवेत् । गृहजनाः किञ्चित् वा क्षीरं प्राप्नुयुः । मम गृहे तु पशुसम्पत्तिः महती अस्ति एव । अतः एतां महिषीं भवान् एव स्वगृहं नयतु'' इति ।

तदा रणधीरः हसन् अवदत् - ''महिषी दुग्धं ददाति इति तु सत्यम् एव । किन्तु एतस्याः पोषणार्थं व्यवस्था अपि चिन्तनीया खलु ? इदानीं कृषितः यत् शुष्कतृणं प्राप्यते तत् वृषभपोषणाय एव पर्याप्तं भवति । पुनः महिष्याः कृते तृणं कुतः आनयेयम् ? तृणक्रयणार्थं मम समीपे धनं नास्ति । अतः एतस्याः पालनं पोषणं च मम भाराय एव भवेत्'' इति ।

तदा तस्य पत्नी मङ्गला अवदत् - ''वृषभपालनं तु क्रियमाणम् अस्ति एव । तेनैव सह महिष्याः अपि पालनं कथं क्लेशाय स्यात् ? गोष्ठं तु अस्ति एव । तृणं क्रेतव्यं भवेत् इति तु सत्यम् । महिषी यत् क्षीरं ददाति तत्सर्वं गृहाय आवश्यकं न भवेत् । अतः यावत् क्षीरम् अधिकं भवति तावत् विक्रीय प्राप्तेन धनेन किं वयं तृणादिकं क्रेतुं न शक्नुयाम ? अतः पोषणविषये अलं चिन्तया । लक्ष्मीः क्षीरे कमले च वसति इति श्रूयते । महालक्ष्मीः इव उपस्थिताम् एतां मा निराकरोतु कृपया ।



एतस्याः स्वीकारात् अस्माकं सम्पत्तिः वर्धिष्यते'' इति ।

श्वशुरस्य, पत्न्याः च अनुरोधस्य कारणतः रणधीरः महिष्याः पोषणम् अङ्गीकृतवान् । ततः वत्ससहिता महिषी तदीयगोष्ठं प्रति आगता । गोविन्दः सन्तोषेण स्वगृहं प्रतिगतवान् ।

अनन्तरदिने रणधीरः क्षीरदोहनं कृत्वा यदा आगतः तदा मङ्गला उक्तवती – ''मम पिता महिषीं यच्छन् महोपकारं कृतवान् । अग्रे क्षीर-दधि-घृतादीनां समृद्धिः स्यात् खलु गृहे ? महिषी ऐदम्प्राथम्येन महालक्ष्मीः इव गृहं प्रति आगता अस्ति । अतः अद्यतनं दुग्धं भगवते वेणुगोपालस्वामिने समर्पयाव । भगवतः कृपा अस्ति चेत् सर्वम् अपि मङ्गलकरं भविष्यति'' इति ।

एतदनुगुणं रणधीरः क्षीरपात्रं गृहीत्वा मन्दिरं गतवान् । तत्समये अर्चकः केनचित् संन्यासिना सह वार्तालापं कुर्वन् आसीत् । रणधीरः अर्चकं स्वस्य आगमनकारणं निवेदितवान् ।

तदा अर्चकः रणधीरम् आश्चर्येण पश्यन् - ''वेणुगोपालस्वामिने धेनुदुग्धं, धेनुदुग्धेन निर्मिताः पदार्थाः च नैवेद्यरूपेण समर्प्यन्ते, न तु महिषीदुग्धम् इति किं भवान् न जानाति ? आस्तां तावत्, एतत् महिषीदुग्धम् इति कथयता भवता युक्तं कृतम् । अन्यथा अहम् अनाचारम् अकरिष्यम् । क्षीरं भगवते समर्पयितुम् आनीतवन्तं भवन्तं निराशं न करोमि । एषः संन्यासी कुम्भमेलं प्रति गच्छन् अस्ति । अतः भगवत्स्वरूपिणे एतस्मै संन्यासिने एव क्षीरम् अर्पयतु । एतेन भवता पुण्यं प्राप्यते'' इति असूचयत् ।

रणधीरः भगवन्तं वेणुगोपालस्वामिनं दूरात् एव भक्त्या साष्टाङ्गं नमस्कृत्य क्षीरपात्रं नीत्वा तस्य संन्यासिनः पुरतः भक्त्या स्थापितवान् ।

संन्यासी क्षणकालं रणधीरं दृष्टवान् । ततः रणधीरम् उद्दिश्य - ''भोः, शर्करां विना अपि एतत् क्षीरं नितरां मधुरम् अस्ति । एतादृशस्य उत्तमक्षीरस्य दाता भवान् अपि उत्तमः स्यात् एव । शुभमस्तु भवतः'' इति वदन् नेत्रे निमील्य क्षणकालानन्तरं वायौ हस्तं प्रसारितवान् । तदा तस्य हस्ते रुद्राक्षद्वयं दृष्टिगोचरं जातम् ।

तत् रणधीराय यच्छन् - ''एतत् देवमन्दिरे स्थापयित्वा प्रतिदिनं भक्त्या पूजयतु । ततः वंशोद्धारकौ द्वौ पुत्रौ उत्पद्येते'' इति वदन्

आशीर्वादम् अकरोत् ।

गृहम् आगतः रणधीरः पत्नीं प्रवृत्तं सर्वम् अवदत् । उभौ अपि रुद्राक्षद्वयं भक्त्या पूजागृहे स्थापितवन्तौ । तस्मिन् एव दिने रणधीरस्य भाग्यम् उद्‌बुद्धम् । अल्पे एव काले एकरुद्वय-मितां समृद्धां भूमिं क्रीतवान् सः । क्षीरदात्र्यः त्रिचतुराः धेनवः अपि क्रीताः । संन्यासिनः कथनस्य अनुसारं उभौ पुत्रौ अपि प्राप्तौ । गच्छता कालेन तौ ज्येष्ठौ जातौ ।

तयोः स्वभावः समानः न आसीत् । एकः कृषिकार्येषु आसक्तः दृश्यते स्म । अहोरात्रं कृषिविषये एव चिन्तयति स्म सः । विविध-गुणांशैः युक्तानि बीजानि उप्त्वा सः अधिकाधिकतया फलसमृद्धिं प्राप्नोति स्म ।

अपरः पुत्रः पशुप्रियः । कस्यचित् अपि पशोः कापि वेदना यदि भवति तर्हि सः स्वयं खिन्नः भवति स्म । पशुवैद्यानां सम्पर्कतः बहूनां रोगाणां चिकित्सां जानाति स्म सः । अतः कदाचित् पशुचिकित्सां अपि सः करोति स्म ।

रणधीरस्य तत्पत्न्याः मङ्गलायाः च पूर्णः विश्वासः आसीत् यत् एतत्सर्वं संन्यासिनः आशीर्वादस्य फलतः एव जायमानम् अस्ति इति । एवमेव दिनानि गतानि ।

रणधीरस्य पुत्रः विंशतिवर्षीयः जातः । तस्मै कन्यां दातुं बहवः कन्यापितरः तद्‌गृहं प्रति आगमनम् आरब्धवन्तः ।

कदाचित् रणधीरः मङ्गला च पुत्राभ्यां सह पूजां कारयितुं वेणुगोपालमन्दिरं प्रति गतवन्तौ ।

पूजां समाप्य यदा ते बहिः आगताः तदा मन्दिरस्य पुरतः कश्चन संन्यासी तैः दृष्टः । तस्य केशाः पलिताः आसन् । शरीरं कृशं जातम् आसीत् । पूर्वम् आशीर्वादं कृतवान् संन्यासी अयम् एव स्यात् इति यावत् रणधीरः चिन्तयन् आसीत् तावता सः संन्यासी एव



स्वयम् अवदत् - ''ह्यः रात्रौ मन्दिरस्य पुरतः शयानेन मया जनानां मुखतः भवतः जीवन-वार्ता समग्रा श्रुता । महान् सन्तोषः जातः मम'' इति ।

रणधीरः झटिति तम् अभिज्ञातवान् । अतः सः तं प्रणम्य - ''क्षन्तव्यः अहं श्रीमन् । झटिति न अभिज्ञातं मया । रुद्राक्षद्वयं दत्त्वा भवता आशीर्वादः कृतः यत् तस्य परिणामतः एव मम गृहस्य स्थितिः उत्तमा जाता । तस्मात् एव पुत्राभ्यां सह निश्चिन्तजीवनं यापयन् अस्मि । सर्वं भवतः आशीर्वादस्य फलम्'' इति उक्त्वा - ''एतत् गोदुग्धम् । भगवते नैवेद्यरूपेण समर्प्य आनीतम् एतत् । कृपया स्वीक्रियताम्'' इति निवेदितवान् ।

संन्यासी क्षीरपात्रम् अस्पृष्ट्वा अवदत् - ''तच्च दिनं मम स्मरणे अस्ति । वेणु-गोपालस्वामी गोदुग्धमात्रम् अङ्गीकरोति इति अर्चकस्य मतम् आसीत् । एतत् मम आश्चर्याय जातम् । भगवान् भक्तप्रियः । सः कमपि पक्षपातेन न पश्यति । भक्त्या अर्पितं सर्वं तस्य प्रियम् एव । तथापि भवता आनीतस्य महिषीक्षीरस्य नैवेद्यरूपेण समर्पणं यदा अर्चकेन निराकृतं तदा अहं तत् पीतवान् । कस्यापि भक्तिभावः न भञ्जनीयः इति मम आशयः आसीत् । भवतः भक्तिं श्रद्धां च अर्चकः अवगन्तुम् असमर्थः आसीत् । भवतः मङ्गलं स्यात् इति मम इच्छा आसीत् । अतः रुद्राक्षद्वयं दत्तं मया । वेणुगोपालस्वामी मम वचनम् अवितथं कृतवान्'' इति ।

तदा दण्डसाहाय्येन तत्र आगतः वृद्धः अर्चकः संन्यासिनं नमस्कृत्य अवदत् - ''भगवन् ! देवः सर्वव्यापी इति जानन् अपि अहम् अज्ञानवशात् आत्मानं सर्वज्ञं भावयन् भगवतः एकमात्रप्रतिनिधिः इव व्यवहारं कृतवान् । भक्तिपुरस्सरं दत्तं सर्वं भगवान् सन्तोषेण स्वीकरोति इत्यंशः मया विस्मृतः आसीत् । भवान् मम अज्ञानं दूरीकृतवान् । भवत्तः नितराम् उपकृतः अस्मि'' इति ।

संन्यासी सर्वान् आशीर्वादेन अनुगृह्य ततः निर्गतवान् ।





# यक्षपर्वतः

## ९

*(भल्लूकगुरुणा सह खड्गवर्मा जीवदत्तः च अरण्यस्थस्य सरोवरस्य तीरम् आगतवन्तौ । तत्र ताभ्यां स्वर्णाचार्यः दृष्टः । समरबाहोः अनुपस्थितौ तदीयाः अनुचराः वीरपुरसैनिकैः सह युद्धं कृतवन्तः । राजसैनिकाः खड्गम् आकृष्य हस्तेन गृहीत्वा समरबाहोः अनुचरान् सम्मुखीकृतवन्तः । तदनन्तरम् ....)*

वीरपुरीयस्य जन्तुशालायाः अधिकारिणा सह सप्त सैनिकाः आसन् । तेषु एकः व्रणितः सन् खञ्जन् तान् अनुसरन् आसीत् । समरबाहोः अनुचराः चत्वारः एव । तथापि ते धैर्येण वीरपुरीयान् सैनिकान् सम्मुखीकर्तुम् उद्युक्ताः अभवन् ।

समरबाहुसैनिकान् दूरात् एव दृष्ट्वा जन्तुशालायाः अधिकारी सहचरान् अवदत्– ''एते तु वणिजः । एतेषाम् उष्णीषधारणक्रमः एव एतम् अंशं ज्ञापयति । खड्गः कथं ग्रहीतव्यः इत्यपि न जानीयुः एते'' इति ।

एतत् वचनं समरबाहोः अनुचरैः अपि स्पष्टतया श्रुतम् । ततः तेषां कोपः नितरां प्रवृद्धः । ते श्मश्रुणः उपरि हस्तं स्थापयन्तः ऊरोः आस्फालनं कुर्वन्तः – ''वयं किं जानीमः, किं च न जानीमः इति युद्धकरणात् ज्ञायते । सम्मुखीकुर्वन्तु अस्मान्'' इति वदन्तः आक्रमणं कृतवन्तः ।

वीरपुरीयाः त्रयः सैनिकाः अल्पे एव काले धराशायिनः जाताः । एतत् दृष्ट्वा अधिकारी व्रणितसैनिकः च वृक्षाणां मध्यतः पलायनम् आरब्धवन्तौ । एतत् दृष्ट्वा अवशिष्टौ उभौ सैनिकौ पराजयम् अङ्गीकृत्य शस्त्रं समर्प्य समरबाहोः अनुचराणां पुरतः शिरः अव-



नमय्य स्थितवन्तौ ।

युद्धसमये सैनिकानां जयघोषः आक्रोशनं चीत्कारः च श्रूयते स्म । एतत् श्रुत्वा अरण्यवासिनः केचन धावन्तः तत्र आगतवन्तः । कयोः पक्षयोः युद्धं प्रचलति, कश्च पक्षः जयं प्राप्नोत् इति ते किञ्चिदपि न ज्ञातवन्तः एव ।

आश्चर्यचकितान् तान् दृष्ट्वा समरबाहोः अनुचराः उक्तवन्तः - ''भवन्तः एतस्मिन् खलु अरण्ये निवसन्ति ? इतः परं वीरपुरीयाय राज्ञे भवद्भिः करः दातव्यः नास्ति । राजा समरबाहुः एव भवतां नूतनराजः अस्ति'' इति ।

तदा कश्चन वृद्धः अरण्यवासी किञ्चित् अग्रे आगत्य भयेन कम्पमानः अपृच्छत् - ''भवन्तः यथा आदिशन्ति तथैव करिष्यामः वयम् । अस्माकं कश्चन सन्देहः निवारणीयः भवद्भिः । अन्यथा न भावनीयम् । भवतां राजा राजधानी च कुत्र अस्ति इति किं वयं ज्ञातुं शक्नुयाम ?'' इति ।

समरबाहोः कश्चन अनुचरः एतस्य उत्तरं वक्तुं यावत् उद्युक्तः तावता उभाभ्याम् अश्वाभ्यां सह कश्चन अरण्यवासी तत्र आगतः । तं दृष्ट्वा वृद्धः अरण्यवासी अपृच्छत् - ''एतौ अश्वौ कुत्र प्राप्तवान् भवान् ?'' इति ।

''वीरपुरीयौ उभौ सैनिकौ अश्वम् आरुह्य धावन्तौ आस्ताम् । तत्समये वृक्षे बद्धौ एतौ अश्वौ दृष्टौ अस्माभिः । तौ एतयोः रज्जुं छित्त्वा गतवन्तौ । ततः गन्तुम् उद्युक्तौ अश्वौ अस्माभिः गृहीतौ'' इति अवदत् अश्वौ आनीतवान् अरण्यवासी ।

''भवतां व्यवहारतः वयं नितरां सुप्रीताः स्मः । राजानम् उक्त्वा उत्तमं पारितोषिकं भवद्भ्यः दाप्यते अस्माभिः । भवन्तः एताभ्याम् अश्वाभ्यां सह पर्वतदुर्गं प्रति आगच्छन्तु'' इति अवदत् समरबाहोः कश्चन अनुचरः ।

समरबाहोः अनुयायिनः बन्धिभूताभ्यां वीरपुरीयसैनिकाभ्यां सह ततः प्रस्थिताः । उभौ अरण्यवासिनौ अश्वाभ्यां सह तेषाम् अनुसरणं कृतवन्तौ । एवं गमनसमये ते वीरपुरीयसैनिकैः गृहीतान् पञ्जरस्थान् वन्यपशून् दृष्टवन्तः ।

तेषां दर्शनतः समरबाहोः अनुचराणाम् उत्साहः प्रवृद्धः । ''एते वन्यपशवः अस्माकं राज्ये यदि स्युः तर्हि वरं स्यात् । अतः एतान् वयं नयाम'' इति उक्तवान् तेषु कश्चित् ।

अत्रान्तरे अन्ये अपि केचन अरण्यवासिनः तत्र आगताः । तान् दृष्ट्वा कश्चन समरबाह्वनुचरः अवदत् - ''एतेषां नयनविचारः तु रमणीयः एव । किन्तु दुर्गपर्यन्तम् एतेषां नयनं कथम् ? अन्यच्च अस्माभिः अद्यावधि वन्यपशवः कदापि न पालिताः । अतः एतेषां पालनस्य अनुभवः अपि नास्ति अस्माकम्'' इति ।

तदा वृद्धः अरण्यवासी अग्रे आगत्य अवदत् - ''श्रीमन् ! एतानि पञ्जराणि चक्रयुक्तानि । अतः उष्ट्राणाम् अश्वानां वा साहाय्येन पञ्जराणि दुर्गं प्रति नेतुं शक्यानि'' इति ।

'एषः उपायः युक्तः अस्ति' इति अचिन्तयन् समरबाहोः अनुचराः । ततः अरण्यवासिनः रज्जुसाहाय्येन उष्ट्रान् पञ्जराकर्षणार्थं सज्जीकृतवन्तः । पक्षिणां जालम् अपि अपरस्य उष्ट्रस्य उपरि आरोपितम् । ततः सर्वे पर्वतदुर्गं प्रति गतवन्तः ।

स्वर्णाचार्यः दुर्गनिर्माणकार्ये मग्नः आसीत् । पर्वतमूलभागे उष्ट्रान्, अश्वान्, पञ्जराणि, अरण्यवासिनः च दृष्ट्वा सः नितराम् आश्चर्यचकितः। कार्यं कुर्वन्तः कर्मकराः अपि परमाश्चर्येण एतत् दृश्यं दृष्टवन्तः ।

अश्वम् आरूढवान् समरबाहोः कश्चन अनुचरः - ''पश्यन्तु तावत् । महामन्त्री स्वर्णाचार्यः अस्मान् दृष्ट्वा आश्चर्यचकितः अस्ति । अहम् अग्रे गत्वा प्रवृत्तं सर्वम् उक्त्वा तं तोषयिष्यामि'' इति वदन् अश्वात् अवतीर्य शिलानां मध्ये पदानि स्थापयन् स्वर्णाचार्यसमीपं गतवान् ।

यदा सः समीपम् आगतः तदा स्वर्णाचार्यः





अपृच्छत् – ''भवन्तः मृगयार्थं खलु गतवन्तः ? एते अश्वाः कुत्र प्राप्ताः ? एतानि पञ्जराणि कुतः आनीतानि ? एते अरण्यवासिनः किमर्थं भवतः अनुसृत्य आगताः ?'' इति ।

तदा समरबाहोः अनुचरः विनयेन स्वर्णाचार्यं नमस्कृत्य अवदत् – ''महामन्त्रिवर्य ! अरण्ये वयं वीरपुरीयसैनिकान् लीलया पराजितवन्तः । उभौ सैनिकौ अस्माभिः बद्धौ अपि । केचन सैनिकाः अस्माभिः मारिताः । उभौ कथञ्चित् पलाय्य वीरपुरं प्रति धावितवन्तौ'' इति ।

उभौ सैनिकौ वीरपुरं प्रति पलायितवन्तौ इति वार्तां श्रुत्वा स्वर्णाचार्यः क्षणकालं भीतः । समरबाहोः अनुचराणां कृत्यं तस्य प्रियं न जातम् । सः झटिति कोपं प्राप्य अवदत् – ''उभौ सैनिकौ वीरपुरं प्रति धावितवन्तौ यत्, तत् महतीं विपदम् आनेष्यति इत्यत्र नास्त्येव सन्देहः । यज्ञाश्वः गृहीतः इव भावयन्तः भवन्तः सन्तोषेण सन्ति । किं भवन्तः जानन्ति यत् सर्पस्य बिले हस्तः प्रसारितः इति । राजसैनिकैः सह युद्धं किमर्थं करणीयम् आसीत् ? सर्वथा अविवेकिनः भवन्तः'' इति ।

यस्मिन् दिने समरबाहुः भल्लूकचर्मधारिभिः बद्धः जातः तस्मात् दिनात् स्वर्णाचार्यः एव नेतृत्वं वहन् आसीत् । मृगयार्थं गताः सैनिकाः यदा व्याघ्रादीनां पञ्जरैः सह आगत्य प्रवृत्तं सर्वं निवेदितवन्तः तदा स्वर्णाचार्यः अवगतवान् यत् वीरपुरीयसेना यदाकदाचिदपि आक्रमणं कर्तुम् अर्हति इति । 'अचिरात् एव युद्धसन्नाहः करणीयः भवेत् अस्माभिः' इति सः अचिन्तयत् ।

स्वर्णाचार्यस्य प्रतिस्पन्दः प्रोत्साहदायकः नास्ति इति ज्ञात्वा सः समरबाहोः अनुयायी अवगतवान् यत् अस्माभिः कृतं सर्वथा अनुचितं जातम् इति । अतः घटनाविवरणसमये कल्पनांशम् अपि योजितवान् सः । ''ते शत्रुसैनिकाः अस्मान् निन्दितवन्तः । समरबाहुम् अपि निन्दितवन्तः । एतत् सोढुम् अशक्ताः वयं युद्धं कृतवन्तः'' इति अवदत् सः ।

अन्यान् अपि अनुचरान् मेलयित्वा स्वर्णाचार्यः अवदत् – ''अस्माकं भ्रातृभिः अनुचितं कृतम् । वीरपुरराजस्य विरोधः सम्पादितः अस्माभिः । यौ प्रतिगतौ तौ उत्प्रेक्षांशं योजयित्वा एव प्रवृत्तं राजानं निवेदयतः । तदा राजा महता सैन्येन सह आगत्य अस्माकं दुर्गम् आक्रामति । अस्माकं दुर्गं तु

निर्माणस्तरे अस्ति । समरबाहुः अपि इदानीम् अत्र नास्ति । तौ क्षत्रिययोद्धारौ खड्गवर्म-जीवदत्तौ वा यदि स्यातां तर्हि किञ्चित् वा धैर्यम् अभविष्यत् । एवं नायकस्य एव अनुपस्थितौ वीरपुरीयसैन्यस्य सम्मुखीकरणं सुलभसाध्यं किम् ?'' इति ।

स्वर्णाचार्येण यत् तर्कितं तदेव प्रवृत्तम् । तत्र वीरपुरे सः जन्तुशालायाः अधिकारी, व्रणितः सैनिकः च राजमार्गेण गच्छन्तौ - ''अस्माकं देशः विपत्तिग्रस्तः अस्ति । महती विपत् उपस्थिता अस्ति । शत्रुराजः अरण्ये आकाशचुम्बिदुर्गं निर्मितवान् दृश्यते । महतीं सेनां स्वीकृत्य सः अचिरात् इतः एव आगमिष्यति'' इति उच्चस्वरेण घोषितवन्तौ पुनः पुनः ।

एतत्काले राजा वीरसिंहः राजप्रासादस्य उपरि स्थित्वा मन्त्रिणा सह इतस्ततः सञ्चरन् वार्तालापे मग्नः आसीत् । जन्तुशालाधिकारि-सैनिकयोः कथनं तेनापि श्रुतम् । महत् आश्चर्यं प्राप्तं तेन ।

अत्रान्तरे सः अधिकारी सैनिकः च दुर्गद्वारं प्राप्तवन्तौ आस्ताम् । दुर्गद्वाररक्षकः असूचयत् यत् अश्वात् अवतीर्य अन्तः गच्छताम् इति ।

एतत् श्रुत्वा जन्तुशालायाः अधिकारी कोपेन - ''किम् एतत् उच्यते भवता ? देशः विपत्तिग्रस्तः अस्ति । शत्रुराजः यदा-कदाचिदपि आक्रमणं कर्तुम् अर्हति । एवं स्थिते किमेषः नियमज्ञापनक्रमः ? अस्माकम् अमूल्यं समयं व्यर्थीकुर्वन् अस्ति भवान्'' इति तं तर्जितवान् ।



अत्रान्तरे कथञ्चित् अवसरं प्राप्य सः सैनिकः अन्तः गन्तुम् उद्युक्तः । तदा द्वारपालकसैनिकः शूलस्य साहाय्येन तम् अश्वात् अपातयत् । ''वीरसिंहमहाराजः जयतात्'' इति वेदनापुरस्सरम् अवदत् सः पतितः सैनिकः ।

एतत्सर्वम् ऊर्ध्वभागात् एव दृष्ट्वा मन्त्री रक्षकभटान् आज्ञापितवान् - ''तौ अन्तः प्रेषयतु'' इति ।

सः अधिकारी सैनिकः च प्रासादस्य उपरि गत्वा महाराजं विनयेन नमस्कृतवन्तौ । तदा मन्त्री अपृच्छत् - ''का विपत् उपस्थिता ? कः आक्रमणं कर्तुम् उद्युक्तः दृश्यते ?'' इति ।

सः अधिकारी मन्त्रिणम् अपि प्रणम्य अवदत् - ''आर्य ! अहं जन्तुशालायाः कश्चन अधिकारी इति भवन्तः जानीयुः एव ।



जन्तुशालायाः निमित्तं पशुपक्षिणः ग्रहीतुम् अहम् अरण्यं गतवान् आसम् । केचन सैनिकाः अपि मया सह आसन् । अरण्ये समरबाहुनामकस्य पर्वतदुर्गीयराजस्य सैनिकाः उष्ट्रान् आरुह्य आगत्य अस्माकम् उपरि आक्रमणं कृतवन्तः । वयं तु धैर्येण तान् सम्मुखीकृत्य कांश्चित् यमसदनं प्रेषितवन्तः । अस्मदीयाः केचन व्रणिताः । युद्धं यदा अनुवृत्तं तदा अस्मदीयानां खड्गस्य बलं क्षीणं जातम् । केचन मृताः अपि । अन्ते आवां कथमपि प्राणान् रक्षन्तौ वार्तां निवेदयितुम् अत्र आगतौ'' इति ।

तदा राजा वीरसिंहः अवदत् - ''मन्त्रिवर्य ! राज्यसीमाप्रदेशे बलवान् शत्रुः उपस्थितः इति भाति । अविलम्बेन सेनाध्यक्षः आनीयताम्'' इति ।

जन्तुशालायाः अधिकारिणः वचने मन्त्रिणः विश्वासः न उत्पन्नः । सः तं स्वसमीपम् आहूय आज्ञापितवान् यत् द्वित्रवारं परिभ्रमणं करोतु मम पुरतः इति । परिभ्रमणकाले मन्त्री परीक्षितवान्– शत्रूणां खड्गस्य प्रहारस्य चिह्नम् एतस्य अधिकारिणः शरीरे लक्ष्यते वा इति । तादृशानि विशेषचिह्नानि तेन न लक्षितानि ।

अत्रान्तरे सेनाध्यक्षः उपस्थितः । तस्य कटिभागे खड्गः लम्बते स्म । सः उपस्थाय राजानं मन्त्रिणं चापि नमस्कृतवान् । अधिकारिणा यद्यत् उक्तं तत्सर्वं सेनाधिकारिणं श्रावितवान् मन्त्री ।

सर्वं श्रुत्वा सेनाध्यक्षः विनयेन अवदत् - ''उष्ट्रिणां विषये समग्रं विवरणम् आनेतुं मया निरञ्जननायकः गुप्तचरः प्रेषितः आसीत् । अरण्यं गतः सः तत्र सुन्दरीम् अरण्यवासिनीं काञ्चित् कन्यां दृष्ट्वा व्यामुग्धः सन् तां परिणीय तत्रैव वासम् आरब्धवान् । अतः उष्ट्रिणां विषये समग्रं विवरणम् अद्यापि न प्राप्तं मया'' इति ।

''एतस्य विलम्बस्य पूर्णः सदुपयोगः स्वीकृतः शत्रुभिः । सेनाध्यक्षवर्य ! गुप्तचरनियुक्तिसमये भवता योग्या परीक्षा करणीया । तस्य विवाहादिकं जातं वा न वा इत्यपि परीक्षणीयम् । ब्रह्मचारिणां नियुक्तितः कीदृशः दुष्परिणामः भवितुम् अर्हति इति भवता इदानीं सप्रमाणम् अवगतं खलु ?'' इति अवदत् मन्त्री ।

तदा राजा अवदत् - ''कीदृशः जनः कुत्र नियोक्तव्यः इति अनन्तरं चिन्तयाम । इदानीं तु सेनाध्यक्षः सैन्येन सह गत्वा शत्रुदुर्गम्

आक्रम्य समूलं नाशयेत् । शत्रुराजं सजीवं गृहीत्वा मम पुरतः उपस्थापयेत् । एषा मम आज्ञा'' इति ।

सेनाध्यक्षः शतेन सैनिकैः, ताभ्यां अधिकारिसैनिकाभ्यां च सह ततः प्रस्थाय तत् निर्मीयमाणम् अरण्यदुर्गं प्रति प्रस्थितवान् ।

दुर्गरक्षणोपायः कः इति स्वर्णाचार्यः बहुधा चिन्तितवान् । वीरपुरीयाणां जयः यदि स्यात् तर्हि प्राणरक्षणार्थं पलायनं करणीयं भवेत् इति विचिन्त्य तेन एकः सुरङ्गमार्गः अपि निर्मापितः ।

सः अरण्यवासिनां कृते धनम् उपायनानि च दत्त्वा अवदत् - ''यत्र शत्रुसेनायाः आगमनं सम्भाव्यते तत्र गुहायां भवन्तः निलीय तिष्ठन्तु । पञ्जरस्थाः सिंहव्याघ्रादयः भवतां निकटे सन्ति खलु ? शत्रुसेना यदा उपस्थिता भविष्यति तदा तेषां बन्धविमोचनं करणीयम् । एतावत् कृत्वा भवन्तः अरण्यं प्रविश्य आत्मरक्षणं कर्तुम् अर्हन्ति । यदि इच्छा अस्ति तर्हि समरबाहोः सैन्यस्य साहाय्यम् अपि कर्तुम् अर्हन्ति । साहाय्यं कृतं चेत् यथायोग्यं धनादिकं दास्यते'' इति ।

एवं विविधान् रक्षणोपायान् कृत्वा स्वर्णाचार्यः उत्तमं सेनाव्यूहम् अपि रचितवान् ।

एकस्मिन् दिने सूर्योदयसमये तेन वार्ता प्राप्ता यत् वीरपुरीयसेना आगच्छन्ती अस्ति इति । अरण्ये निलीय स्थितान् सहचरान् प्रति एतां वार्तां प्रापितवान् स्वर्णाचार्यः । सर्वेभ्यः सहचरेभ्यः शूलखड्गादीनि आयुधानि तेन दत्तानि ।

अल्पे एव काले वीरपुरीयः सेनाध्यक्षः पर्वतमूले उपस्थाय कोषतः खड्गं निष्कास्य वेगेन चालयन् समरबाहुसैनिकान् उद्दिश्य - ''अये दुष्टाः ! अहं वीरपुरीयसेनाध्यक्षः वदामि । भवन्तः सर्वे यमसदनं प्राप्स्यन्ति'' इति ।

पर्वतस्य उपरि स्थिताः समरबाहुसैनिकाः प्रत्युत्तरं किमपि अवदन्तः शत्रुसेनाम् उद्दिश्य शूलादीनि क्षेप्तुम् उद्युक्ताः अभवन् । एवं तैः क्षिप्तम् एकं शूलं सेनाध्यक्षस्य स्कन्धे लग्नं जातम् ।

- *(अनुवर्तते)*



अत्रास्ति प्रश्नावली !!

# पुरी



पुरी सर्वविधान् अपि पर्यटकान् सन्तोषयति । यदि भवन्तः धार्मिकमनोभावयुक्ताः तर्हि अत्रास्ति जगन्नाथदेवालयः । यदि भवन्तः समुद्रप्रियाः तर्हि 'स्वर्णतीरं' भवतां प्रतीक्षां करोति । भवन्तः आहारप्रियाः चेत् पुरीस्था आहारविपणिः भवतः निराशान् न करोति ।

भारते स्थितेषु श्रेष्ठेषु विहारयोग्यतीरेषु अन्यतमम् अस्ति पुरीस्थं समुद्रतीरम् । तरणाय काष्ठफलकावलम्बिप्लवनाय च एतत् नितरां प्रशस्तम् अस्ति ।

पुरीस्थाः देवालयाः अतिप्रसिद्धाः । तत्रापि द्वादशे शतके निर्मितं गोपुरं नितरां चित्ताकर्षकम् । 'नीलाचल'नामकस्य पर्वतस्य उपरि स्थितस्य एतस्य मन्दिरस्य आराध्यदेवः अस्ति भगवान् विष्णुः ।

अष्टमीटरात्मकः सूर्यस्तम्भः पूर्वं कदाचित् आसीत् कोणार्कस्थस्य सूर्यदेवालयस्य पुरतः ।

जगन्नाथपुर्याः वैशिष्ट्यद्वयम् । एकं प्रसिद्धा वार्षिकी रथयात्रा । अपरम् 'आनन्दविपणिः', या च जगति एव अद्वितीयत्वेन ख्याता अस्ति । जगन्नाथदेवालयः द्विसहस्राधिकजनेभ्यः जीविकां प्रददाति ।

पुरी क्रेतॄणां स्वर्गायते । अत्र हस्तनिर्मितवस्तूनां, विविधशिलाशिल्पानां, काष्ठशिल्पानां, शुक्तिनिर्मितवस्तूनां, वस्त्रोपरि निर्मितकलाचित्राणां, हस्तस्यूतिवस्तूनां च उपलब्धिः भवति विशेषतः ।

पुरीं प्राप्तुं मार्गः - भुवनेश्वरतः ६० कि. मी. दूरे अस्ति पुरी । कोणार्कतः च ३५ कि. मी. दूरे अस्ति ।

## प्रश्नोत्तरस्पर्धा भवदर्थम् !

**ऊनचतुर्दशवर्षीयाः अत्र भागं वोढुम् अर्हाः !!**

१. जगन्नाथस्य भ्रातृभगिन्योः नाम किं, ययोश्च रथः अपि रथयात्रावसरे भवति ?

........................................................

२. रथयात्रावसरे द्वि कि. मी. दूरे स्थितस्य लघुमन्दिरस्य पुरतः सप्ताहं यावत् रथाः तिष्ठन्ति । तस्य मन्दिरस्य नाम किम् ?

........................................................

३. ६४ योगिनीनां निमित्तं निर्मितेषु चतुर्षु अन्यतमं मन्दिरम् ओरिस्साराज्ये कुत्र द्रष्टुं शक्यम् ?

........................................................

भवताम् उत्तराणि रिक्ते स्थले लिखित्वा नाम-सङ्केतादिभिः अधस्तनं विवरणपत्रं प्रपूर्य अधोनिर्दिष्ट-सङ्केताय प्रेषयन्तु -

**Orissa Tourism Quiz Contest**
**Chandamama India Limited**
**No.82, Defence Officers Colony**
**Ekkatuthangal, Chennai - 600 097**

नाम - ........................................

वयः - ........................................

सङ्केतः - ........................................

........................................

Pin : .............. Phone ..............




Winners picked by Orissa Tourism in each contest will be eligible for **3-days, 2-night** stay at any of the **OTDC Panthanivas**, upto a maximum of four members of a family. Only original forms will be entertained. The competition is not open to CIL and Orissa Tourism family members. Orissa Tourism, Paryatan Bhaven, Bhubaneswar - 751 014. Ph : (0674) 432177, Fax : (0674) 430887, e-mail : ortour@sancharnet.in. Website : Orissa-tourism.com

# विश्वसेनस्य दिग्भ्रान्तिः

एतस्याः मूलकथायाः रचनाकारः



**पवनकुमारः**
बळ्ळारी

दृढव्रती त्रिविक्रमः पुनरपि वृक्षस्य समीपं गत्वा यथापूर्वं शवं स्कन्धे आरोप्य श्मशानं प्रति प्रस्थितवान् । तदा शवान्तर्गतः वेतालः अवदत् - ''अये राजन् ! पुनः पुनः मया बोध्यमानः अपि भवान् किमर्थम् एतावत् कष्टम् अनुभवति ? मध्यरात्रे एवं श्मशाने अटनस्य प्रयासः किमर्थकः ? विवेकी कोऽपि एतादृशे प्रदेशे न सञ्चरति । भवतः परिश्रमं पश्यतः



मम भासते यत् राज्यविस्ताराकाङ्क्षी स्यात् भवान् इति । अतः एव मन्त्रतन्त्रादिशक्तिं वशीकर्तुम् अयं प्रयासः भवतः । किन्तु किम् एतत् फलकारि भवेत् ? यथा विश्वसेनेन असफलता प्राप्ता तथैव भवान् अपि असफलतां प्राप्नुयात् इति मम चिन्तनम् । तत् न स्यात् खलु ? अतः भवतः विवेकस्य उद्बोधनार्थं विश्वसेनस्य कथां श्रावयामि । श्रद्धया शृणोतु तावत्'' इति ।

अनन्तरं वेतालेन कथा आरब्धा -

विश्वसेनः मैथिलीराज्यस्य राजा । मृगयायां तस्य विशेषरुचिः । राज्यसम्बन्धीनि प्रमुखकार्याणि अपि उपेक्ष्य सः मृगयार्थं गच्छति स्म । कदाचित् सः सैनिकैः सह अरण्यं गतवान् । दिनद्वयं यावत् अरण्ये एव वसन् सः विविधान् पशून् मारितवान् ।

तृतीये दिने राजधानीं प्रति गन्तुम् उद्युक्तः सः सैनिकयोः सम्भाषणात् ज्ञातवान् यत् अनतिदूरे एव कस्यचित् महात्मनः आश्रमः अस्ति इति । सः आश्रमः द्रष्टव्यः इति इच्छा उत्पन्ना तस्य मनसि । अतः सः सैनिकान् आज्ञापितवान् -''भवद्भिः मम अनुसरणं करणीयं नास्ति । अहम् आश्रमं प्रविश्य महात्मनाम् ऋषीणां दर्शनं प्राप्तुम् इच्छामि । सूर्यास्तात् पूर्वं प्रत्यागमिष्यामि च'' इति ।

विश्वसेनस्य राज्ये वर्षद्वयतः क्षामः अनुवर्तते स्म । अतः राज्यस्य स्थितिः शोचनीयतां गता आसीत् । जनानां हाहाकारः श्रूयते स्म । एतस्याः समस्यायाः परिहारः कथम् इति चिन्तयन् राजा अग्रे गच्छन् आसीत् । तावता कश्चन वानरशिशुः वृक्षात् पतन् तेन दृष्टः ।

'वराकस्य एतस्य वानरशिशोः माता मृता स्यात् । वृक्षशाखायां सञ्चरन् अयम् अनभ्यासवशात् वृक्षात् पतितः स्यात् । एतम् अहं राजधानीं नेष्यामि । कस्मैचित् सैनिकाय एतस्य पोषणदायित्वं दास्यामि' इति विचिन्त्य राजा वानरशिशुम् उन्नेतुं हस्तं प्रसारितवान् । तावता तस्य वानरशिशोः माता झटिति उत्प्लुत्य नखैः राज्ञः शरीरे व्रणान् उत्पाद्य स्वशिशुम् उन्नीय वृक्षम् आरूढवती ।

एतस्याः घटनायाः कारणतः राज्ञः मनः अशान्तं जातम् । एताम् एव घटनां स्मरन् सः अनतिदूरे स्थितम् ऋषेः आश्रमं प्रविष्टवान् । ऋषिः राजानम् आदरेण स्वागतीकृत्य- ''राजन् ! मृगयार्थम् एतावद्दूरम् आगतवतः भवतः मुखे प्रसन्नता न दृश्यते । एतस्य कारणं किम् ?'' इति अपृच्छत् ।

विश्वसेनः दीर्घं निश्श्वस्य वानरशिशु-

पतनघटनां विस्तरेण उक्त्वा वानरशिशोः मात्रा नखैः कृतानां व्रणानां वार्ताम् अपि निवेद्य - ''मानवः पशूनां विषये दयां सहानुभूतिं च दर्शयितुम् इच्छति । असहायानां साहाय्यं कर्तुम् इच्छति सः । किन्तु पशवः तत् साहाय्यं निराकुर्वन्ति । परिस्थितिः दिने दिने परिवर्तमाना अस्ति । अतः साहाय्यकरणात् अपि मानवेन भेतव्यम् अभवत्'' इति अवदत् ।

राज्ञः वचनं श्रुत्वा मन्दहासं प्रकटयन् मुनिः अवदत् - ''राजन् ! सर्वजन्तूनां हितम् एव ये चिन्तयन्ति तेषु अन्यतमः तु न भवान् । अद्यपर्यन्तं भवता अनेके पशवः पीडिताः मारिताः च । तेषां पशूनां परिवारस्य का गतिः, मरणं गच्छतः पशोः कीदृशी वेदना इत्यादिकं मारणावसरे भवता न चिन्तितम् । किन्तु एकस्य वानरशिशोः विषये एतावत् चिन्त्यते । एतत् तु आश्चर्याय । भवतः राज्ये वर्षद्वयतः क्षामः विजृम्भते । जनाः पशु-पक्षिणः च आहाराभावतः प्रतिदिनं ताम्यन्ति । तेषां रक्षणं भवतः आद्यं कर्तव्यम् । एतत् कदापि किं भवता चिन्तितम् ? क्षाम-समस्यायाः परिहारः कथं करणीयः इति भवता कदापि किं परामृष्टम् ? क्षामतः जनानां रक्षणार्थं भवता किं कृतम् ?'' इति ।

मुनेः कठोरवचनं श्रुत्वा राजा निस्तेजस्कः जातः । सः मुखम् अवनमय्य अवदत् - ''ऋषिवर्य ! एषा समस्या न असाधारणी । प्रतिपञ्चवर्षम् एषा क्षामसमस्या अस्माकं देशे अस्ति एव । पूर्वजानां शासनकाले अपि एषा समस्या तदा तदा बाधते स्म'' इति ।

''किम् एतस्याः निवारणार्थं कोऽपि



उपायः एव नास्ति ?'' इति मुनिः कठोरस्वरेण अपृच्छत् ।

विश्वसेनः क्षणं यावत् विचिन्त्य अवदत् - ''एतस्याः समस्यायाः परिहारार्थम् उपायः नास्ति इति न । अधिकाधिकसम्पत्तिः सङ्गृहीता चेत्, सैन्यबलं बहुधा वर्धितं चेत् च एषा समस्या परिहर्तुं शक्या । अन्यदेशाः आदौ स्वाधीनीकरणीयाः । ततः तेषु राज्येषु स्थितानि धान्यानि अन्यवस्तूनि च क्षामयुक्त-प्रदेशं प्रति आनेतव्यानि । एतस्मात् क्षामग्रस्ताः जनाः आहारादिकं प्राप्तुम् अर्हन्ति । ततः समस्या परिहृता भविष्यति'' इति ।

''अहो, अपूर्वं चिन्तनं भवतः ! धनबलं सेनाबलं च वर्धयित्वा सम्राट्त्वं सम्पादनीयम् इति भवतः वास्तविकी इच्छा । एवं ननु ? यदि एषा एव भवतः प्रमुखा इच्छा तर्हि इतः पञ्चक्रोशमितं दूरं क्रामतु भवान् । तत्र



रजतपर्वतः दृश्यते । यावत् इच्छति तावत् रजतं ततः स्वभवनं प्रति नेतुम् अर्हति भवान्'' इति असूचयत् संन्यासी ।

ऋषेः वचनस्य अनुसारं राजा पञ्चक्रोशमितं दूरं क्रान्त्वा रजतपर्वतं प्राप्तवान् । सूर्यप्रकाशकारणतः तत्र रजतं विशेषतः प्रकाशते स्म । आनन्दपरवशः सः – ''अहो, रजतानां राशिः एव अस्ति अत्र ! शताधिकशकटाः आनीताः चेत् एतानि अहं राजधानीं नेतुं शक्नुयाम्'' इति स्वगतम् उक्त्वा ततः प्रतिगन्तुम् उद्युक्तः ।

तावता अनतिदूरे एव तेन कस्यचित् ऋषेः आश्रमः दृष्टः । सः मुनिः हरिणशिशुभिः कोमलतृणानि खादयन् आसीत् । हरिणशिशवः च प्रेमपूर्णदृष्ट्या मुनिं पश्यन्तः आसन् । एतत् दृश्यं राज्ञः मनः अहरत् । सः लज्जितः जातः । 'अहो, निरपराधान् एतादृशान् जन्तून् अहम् अनेकान् मारितवान् खलु !' इति खेदम् अनुभूतवान् सः ।

अत्रान्तरे तस्य आगमनं लक्षितवान् मुनिः – ''राजन् ! कुतो लज्जा ? अङ्गरक्षकान् विनैव एतावद्दूरं किमर्थम् आगतं भवता ? आश्रमम् आगच्छतु तावत्'' इति अवदत् ।

राजा सन्यासिनः पुरतः किमपि गोपयितुं न इच्छति स्म । अतः सः रजतपर्वतवार्ताप्रकरणं श्रावयित्वा – ''रजतं नेतुम् अहम् अत्र आगतः'' इति अवदत् ।

तत् श्रुत्वा मुनिः राजानं नखशिखान्तं सकृत् दृष्ट्वा – ''राजन् ! रजतपर्वतदर्शनात् एव भवान् एवं सन्तुष्टः चेत् सुवर्णपर्वतदर्शनात् भवान् किं वा वदेत् ? इतः पञ्चक्रोशदूरे सुवर्णपर्वतः एव अस्ति'' इति अवदत् ।

तस्य वचने विश्वसन् राजा तं भक्त्या प्रणम्य ततः निर्गतः । पञ्चक्रोशदूरं यदा अतिक्रान्तं तदा तेन सुवर्णपर्वतः दृष्टः । सुवर्णपर्वतः पीतकान्त्या विलसति स्म । आनन्दतुन्दिलः राजा स्वगतम् अवदत् – ''अहो, अद्य मम जीवनं धन्यम् । एषः स्वर्णपर्वतः अद्य मदीयः जातः'' इति ।

ततः अनतिदूरे एकं सरोवरम् आसीत् । कश्चन योगी स्नानं समाप्य ततः प्रत्यागच्छन् राज्ञः वचनं श्रुतवान् आसीत् । सः दण्डम् उन्नीय राजानम् अवदत् – ''स्वर्णपर्वतदर्शनात् एव आनन्दतुन्दिलः खलु भवान् ! वज्रखातस्य तुलनायाम् एषः सुवर्णपर्वतः कःपदार्थः । वज्रखातश्च इतः पञ्चक्रोशदूरे अस्ति'' इति ।

''किम् एतत् सत्यम् ?'' इति वदन् राजा मुनीन्द्रं भक्त्या प्रणम्य ततः निर्गतवान् ।

मुनीन्द्रस्य कथनस्य अनुगुणं पञ्चक्रोशदूरे तेन वज्रखातः प्राप्तः । सूर्यकिरणानां कारणतः वज्राणि चमत्कृतिं जनयन्ति स्म । तेषां वज्राणां मध्ये फणां प्रसार्य स्थिताः सर्पाः अपि राज्ञा दृष्टाः ।

वज्राणि दृष्ट्वा आनन्दातिरेकं सोढुम् अशक्तः राजा कम्पमानस्वरेण अवदत् - ''सुशिक्षिताः मम सैनिकाः एकैकेन बाण-प्रहारेण द्वित्रान् सर्पान् मारयितुम् अर्हन्ति । ततः अत्रत्यानि सर्वाणि वज्राणि अश्वस्य, गजस्य, उष्ट्राणां च उपरि आरोप्य राजधानीं नेष्यामि । मम राज्यं सुभिक्षं कृत्वा सैन्यशक्तिं दशगुणीकृत्य प्रतिवेशिदेशान् सर्वान् जेष्यामि । चक्रवर्ती सन् अहं राज्यशासनं करिष्यामि । चिरकाङ्क्षितः मम स्वप्नः अचिरात् एव साकारः भविष्यति । तदा मत्तुल्यः कोऽपि न भविष्यति'' इति ।

तावता कश्चन गम्भीरः कण्ठध्वनिः श्रुतः - ''राजन् ! ततोऽपि श्रेष्ठाः ततोऽपि अधिकभाग्यशालिनः सन्ति एतस्मिन् लोके बहवः । तेषु अहम् अपि अन्यतमः अस्मि'' इति । एतत् श्रुत्वा विश्वसेनः नितराम् आश्चर्यचकितः ।

अनन्तरक्षणे तेजस्वी कश्चन संन्यासी तस्य पुरतः उपस्थितः । राजा आश्चर्येण स्तब्धः सन् तं निर्निमेषम् अपश्यत् ।

सः तेजस्वी संन्यासी गम्भीरस्वरेण अवदत् - ''भवतः स्वप्नाः साकारतां गताः खलु ? रजतस्वर्णवज्रादीनि भवान् राजधानीं नेतुम् इच्छति । सैन्यबलं दशगुणं वर्धयित्वा आक्रमणेन प्रतिवेशिदेशान् जित्वा सम्राट्



भवितुम् इच्छति । चिरकाङ्क्षितं स्वप्नं साकारीकर्तुम् इच्छति । किन्तु युद्धस्य कारणतः असङ्ख्यजनानां प्राणहानिः भविष्यति, अगणितजनानां परिवाराः अश्रु-धारां वाहयन्ति इत्यंशः किं भवता कदापि चिन्तितः ? न खलु ?'' इति ।

एतत् श्रुत्वा राजा विश्वसेनः धैर्येण अवदत् - ''महामहिमन् ! राज्यविस्ताराकाङ्क्षा क्षत्रियाणां सहजः गुणः । युद्धं क्षत्रियस्य धर्मः । तस्य पालनार्थम् एव तदीयं जीवनम् । मरणम् अपि तस्मादेव । अत्र किम् अनौचित्यम् ?'' इति ।

तदा तेजस्वी पुरुषः मन्दहासपूर्वकं - ''यतः जनानाम् अहितं भवति सः धर्मः कदापि भवितुं न अर्हति । सर्वोऽपि क्षत्रियः अन्यराज्यं वशीकर्तुम् एव यदि इच्छेत् तर्हि कियती प्राणहानिः स्यात् इति किं भवता

चिन्तितम् ? तथापि युद्धे प्रवृत्तिः कथं श्रेयसे स्यात् ? शान्त्यै क्रियमाणः यत्नः एव श्लाघ्यः । तत् आस्तां तावत् । आशीर्वाद-रूपेण भवते एकं वरं ददामि । युद्धे जित्वा सम्राट् भवितुम् इच्छति भवान्, उत क्षामादिकं निवार्य जनानां हृदयसम्राट् भवितुम् इच्छति ? किमपि एकं वरयतु । तत् सिद्धं भविष्यति'' इति उक्त्वा ततः अदृश्यः अभवत् ।

राजा विश्वसेनः अविलम्बेन प्रतिगत्य सैनिकानां समीपं गत्वा आज्ञापितवान् - ''अद्यैव गृहं गत्वा भवन्तः स्वस्य आयुधानि गृहे एव सुरक्षितं स्थापयन्तु । ततः ग्रामं ग्रामं गत्वा तत्रत्यां स्थितिं शीघ्रातिशीघ्रं मां वदन्तु । ग्रामीणानां हितार्थं प्रयत्नं कुर्वन्तु'' इति ।

वेतालः एवं कथां समाप्य अवदत् - ''राजन् ! विश्वसेनः चिरकालात् इच्छति स्म यत् अपारं धनं सम्पादनीयं, सैन्यशक्तिः वर्धनीया, चक्रवर्तित्वं च प्राप्तव्यम् इति । तस्य इच्छायाः पूर्तेः क्षणः उपस्थितः आसीत् । अपारा सम्पत्तिः अपि हस्तगता आसीत् । तथापि किमर्थं परित्यक्तवान् सः ? तेजस्वी संन्यासी आशीर्वादं कर्तुम् इच्छति स्म यत् युद्धे विजयीभूय भवान् सम्राट् भवतु इति । किमर्थं तत् राज्ञा निराकृतम् ? किमर्थं वा तेन तादृशः वरः न पृष्टः ? मम एतेषां सन्देहानाम् उत्तरं जानन् अपि भवान् न वदति चेत् भवतः शिरः सहस्रधा भग्नं भवेत्'' इति ।

तदा त्रिविक्रमः अवदत् - ''यः धनेच्छावान् भवति तस्मिन् दया-सहानुभूति-संवेदनादयः सर्वथा न भवन्ति इति न । वानरशिशुप्रसङ्गे, हरिणदर्शनप्रसङ्गे च विश्वसेनस्य अन्तरङ्गे दया-वात्सल्यादिगुणः निहितः आसीत् इति तु स्पष्टम् । तेजस्वी पुरुषः युद्धपरिणामान् मर्मस्पर्शितया निरूपितवान् । एतस्मात् विश्वसेनः युद्धाशां परित्यक्तुं जीविसेवां कर्तुं च सङ्कल्पितवान् । जनकल्याणाय स्वस्य समर्पणम् एव उचितम् इति सः निर्णीतवान् । जनहृदयसम्राट्त्वम् एव तेन इष्टम् । अतः युद्धं, ततः प्राप्यमाणं चक्रवर्तित्वं च सः निराकृतवान्'' इति

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत् । अतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् आलम्बितवान् ।



# मुल्लुना कृतः प्रतीकारः



कथा – **एम्. शङ्करराव्**
विजयनगरम

एकदा वनपुरे मुल्लुः प्रभाते उत्साहेन उत्थितवान् ।



उपाहारार्थं प्रतिदिनं गृञ्जनकानि एव भवन्ति स्म ।





सः विविधरुचियुक्तम् आहारम् इच्छति स्म ।









भोलाभल्लुक्याः पाकशालातः निर्गतः पाकगन्धः तेन आघ्रातः ।

सः भोलाभल्लुक्याः गृहं प्रति धावितवान् ।



एवं गमनसमये फीतिश्रृगालेन सः घट्टितः जातः







कुपितः फीतिः दन्तान् कटकटायमानः क्रोधेन मुल्लुम् अपश्यत् ।

भीतः मुल्लुः फीतिश्रृगालं क्षमां प्रार्थितवान् ।







मुल्लोः खादनं करणीयम् एव इति निश्चितवान् आसीत् फीतिः ।




यथा इच्छति तथा मां खादितुम् अर्हति भवान् । यदि जीवेयं तर्हि भवतः उपकारं कुर्याम् ।


प्रतिदिनं शशानाम् एव खादनात् किम् अरुचिः न जाता भवतः ?
कुतः भवता भोलया सज्जीकृतः पाकः न सेवनीयः ?


युक्तम् एतत् । नूतनस्य रुचिकरस्य आहारस्य सेवनं ममापि सम्मतम् एव ।


किन्तु भोलया कृतस्य पाकस्य प्राप्तिः कथम् ?


एतदर्थं मुल्लोः उपायः सिद्धः एव आसीत् ।
तदर्थं मया मार्गः चिन्तितः अस्ति । मया यथा उच्यते तथा आचरतु । तदा भोलया कृतः पाकः प्राप्यते ।


मुल्लुः फीतिः च वैद्यस्य भोलस्य गृहं गतवन्तौ । ततः फीतिः भूमौ पतित्वा वेदनाम् अभिनीतवान् ।


मुल्लुः वैद्यं भोलं साहाय्यार्थम् आनीतवान् ।
वैद्यवर्य ! मम सुहृत् अस्वस्थः । साहाय्यं करोतु कृपया
मम गृहम् आनयतु । अहम् औषधं दास्यामि ।


एतत् तु उत्तमम् ।
फीतिः वैद्यस्य भोलस्य गृहे दोलायां सुखेन शयितवान् । मुल्लुः तस्य रक्षकः आसीत् ।


भोला भोजनं सज्जीकुर्वती आसीत् । मुल्लोः फीतेः च महान् आनन्दः ।


किञ्चित्कालानन्तरं भोलः भोला च विहारार्थं प्रस्थितवन्तौ ।
एषः युक्तः समयः ।


अहो, रुचिकरम्
फीतिः पाकशालां प्रविश्य सर्वं सुखेन अखादत् ।


यदा मुल्लुः तत्र आगतः तदा फीतिः तृप्त्या उद्गिरणं करोति
रे वराक, अपसरतु इतः ।


फीतिः भोजनस्य अनन्तरम् उच्चैः उद्गिरणम् अकरोत् ।
BRRR


फीतिः स्वार्थचिन्तनं दृष्ट्वा मुल्लुः क्रुद्धः । प्रतीकार-बुद्धिः तस्मिन् उत्पन्ना ।
भवता एतस्य फलं प्राप्यते
भवतु


फीतिना मुल्लुम् उपेक्ष्य दोलामञ्चे शयनं कृतम् । मुल्लुः प्रतीकारोपायम् अचिन्तयत् ।


वराक ! सर्वं खादितं खलु भवता ।
सः पाकशालां गत्वा कानिचन मीनास्थीनि सङ्गृहीतवान् ।


सः तानि दोलामञ्चपर्यन्तं तत्र तत्र पातितवान् ।


फीतिः तु शयानः सशब्दं निद्रां करोति स्म ।
अग्रिमं परिणामं अहं निरीक्षिष्ये ।


मम बुभुक्षा
गृहं गत्वा भोजनं करवाव ।
अल्पकालस्य विहारस्य अनन्तरं वैद्यः भोलः तत्पत्नी च प्रत्यागतौ ।


पाकपात्राणि सर्वाणि रिक्तानि लक्षितानि तया ।
केन खादितं स्यात् एतत्


तया दोलामञ्च-पर्यन्तं मीनास्थीनि लक्षितानि ।
मया ज्ञातम्


डा॰ भोलः तत्पत्नी च निश्शब्दं गत्वा फीतिं सम्यक् प्रहृतवन्तौ


योग्यः सत्कारः प्राप्तः भवता वराक !


अहो वेदना ! मया वस्तुतः वैद्यः द्रष्टव्यः एव ।


वञ्चना सदा हानिकारिका ।
समाप्ता ।

# सर्पेण दत्तम् उपायनम्


जयन्तानन्दः
सम्भलपुरम्


पि. अभिषेकः
हैदराबाद

रामपुरे रमानामिका बालिका निवसति स्म । रामपुरम् उत्तर-प्रदेशस्थः लघुग्रामः । रमा सुन्दरी । तस्याः माता दिवं गता आसीत् । विमाता, विमातृपुत्री श्यामला च तां प्रतिदिनं पीडयतः स्म । गृहकार्याणि तया एव करणीयानि भवन्ति स्म ।

''अये अलसशिखामणे ! शीघ्रं वस्त्रक्षालनं पात्रक्षालनं च समापयतु । भवत्या पित्रे क्षेत्रं प्रति भोजनं नेतव्यम् अस्ति । मह्यं चायं सज्जीकरणीयम् अस्ति । हुँ, शीघ्रम् ...' इत्येतादृशानि तर्जनवचनानि प्रतिदिनम् अपि श्रोतव्यानि भवन्ति स्म रमया ।

एकदा पितुः निमित्तं यदा सा आहारं नयन्ती आसीत् तदा वृक्षात् किमपि तस्याः शरीरे अपतत् । तस्मात् भीता सा आक्रन्दनम् अकरोत् । तस्याः आक्रन्दनं श्रुत्वा कश्चन सर्पः तत्र आगतः । ''बाले ! किमर्थम् आक्रन्दनं क्रियते भवत्या ?'' इति सः अपृच्छत् ।



रमा अश्चर्येण सर्पम् एव पश्यन्ती प्रवृत्तं सर्वं निवेदितवती । तदा सर्पः अवदत् - ''एषः क्षुल्लकः विषयः । अहं भवत्याः विशेषसाहाय्यं कर्तुम् इच्छामि, यदि भवती मम साहाय्यं करिष्यति । मम भगिनी श्वः एकं समारम्भं गन्तुम् इच्छति । तदर्थं सा एकां मालाम् अपेक्षते । यदि भवती मन्निमित्तम् एकां मालां रचयित्वा दद्यात् तर्हि अहं भवत्याः उपकारं कुर्याम्'' इति ।

रमा समीपस्थानि पुष्पाणि सङ्गृह्य एकां रमणीयां मालां रचितवती । तां प्राप्य सर्पः नितरां सन्तुष्टः । ''मम प्रार्थनां पुरस्कृत्य साहाय्यं कृतवती भवती मृदुहृदया । अतः अहं भवत्यै वरं ददामि । ततः भवती सुन्दरी भविष्यति, भवत्याः कण्ठस्वरश्च सुमधुरः भविष्यति'' इति अवदत् सर्पः ।

एतावत् उक्त्वा सर्पः गतः । यदा रमा गृहं प्राप्तवती तदा विमाता तस्याः रूपं कण्ठस्वरं च दृष्ट्वा नितराम् आश्चर्यचकिता । ''कथम् एतत् परिवर्तनं जातम् ?'' इति पृष्टवती सा । रमा प्रवृत्तं सर्वं निवेदितवती ।

अनन्तरदिने विमाता स्वपत्ये आहारं दातुं पुत्रीं श्यामलां प्रेषितवती । श्यामला अपि मार्गे कञ्चित् सर्पं दृष्टवती । वरदाता सर्पः अयम् एव

इति सा न ज्ञातवती । सः सर्पः मालादानं प्रार्थयत् । तं सामान्यसर्पं मत्वा श्यामला तं पादेन प्रहृतवती ।

तदा सर्पः शापं दत्तवान् - ''भवती कुरूपिणी भवतु । सर्वे भवतीं निन्दन्तु'' इति ।

यदा सा गृहं प्राप्तवती तदा माता स्वपुत्र्याः कुरूपं दृष्ट्वा आघातं प्राप्तवती इव । श्यामला तन्माता च रोदनम् आरब्धवत्यौ । तयोः दुःखं दृष्ट्वा रमा नितरां खिन्ना ।

सा तु करुणामयी खलु ? अतः सा निर्णीतवती - सर्पं दृष्ट्वा तस्य साहाय्येन मम भगिन्याः कुरूपं निवारणीयम् इति ।

यदा रमा सर्पसमीपम् आगत्य स्वभगिन्याः



कुरूपनिवारणं प्रार्थितवती तदा सर्पः तस्याः स्नेहपरतां दृष्ट्वा नितरां सन्तुष्टः । सः रमाम् अवदत् - ''भवत्याः स्वभावः अत्युत्तमः । अतः भवत्याः प्रार्थनाम् अहं तिरस्कर्तुं न अर्हामि । भवत्याः भगिनी पूर्वतनम् एव रूपं प्राप्स्यति । ते भवत्याः अहितम् एव चिन्तयतः चेदपि भवती तयोः हितं चिन्तयति । अतः भवत्याः अपरम् उपकारं कर्तुम् इच्छामि अहम् । अग्रिमसप्ताहे राजा एतेन मार्गेण गमिष्यति । तदा भवती तस्मै मधुरकण्ठध्वनिं श्रावयतु । तदा भवती महिषी भविष्यति'' इति ।

सर्पेण यथा उक्तं तथा अनन्तर-सप्ताहे राजा तं ग्रामम् आगतवान् । राज्ञः स्वागतार्थं सर्वे सम्मिलिताः । रमां ते उक्तवन्तः - 'भवती एकं गीतं गायतु' इति । रमा सुमधुर-कण्ठेन एकं गीतं गीतवती । तत् श्रुत्वा राजा नितरां सन्तुष्टः । तस्याः रूपं तु नयनमनोहरम् आसीत् एव । कः वा अविवाहितः तरुणः सुन्दरीं मधुरकण्ठां तरुणीं दृष्ट्वा आकृष्टः न भवेत् ?

राजा तरुणः अविवाहितः च आसीत् । सः तस्याः पितरम् अवदत् - ''अहम् एतां परिणेतुम् इच्छामि'' इति । रमायाः पिता तां राज्ञे दातुं सिद्धः आसीत् । किन्तु रमा झटिति अङ्गीकारं न सूचितवती । ''पितुः, मातुः, भगिन्याः च सहवासं त्यक्तुम् अहं न इच्छामि'' इति उक्तवती सा ।

अतः राजा तं परिवारम् एव राजधानीं प्रति नीतवान् । परिवारजनाः सर्वे उत्तमे उद्योगे नियोजिताः तेन । एतस्मात् रमा नितरां प्रसन्ना जाता । ततः राज्ञा परिणीता सा पट्टमहिषी अभवत् ।

विमाता श्यामला च इदानीं लज्जाम् अनुभूत-वत्यौ ।

''भवत्याः विषये उत्तमः व्यवहारः न प्रदर्शितः आसीत् आवाभ्याम् । अतः आवां क्षन्तव्यौ'' इति वदन्त्यौ ते रमां क्षमां प्रार्थितवत्यौ ।

**करुणा जेतुम् अर्हति दुष्टताम् अपि**

# गर्दभेन ज्ञातः पाठः



प्राची सि. चन्द्रभूषण पार्कर्, मुम्बयी



अश्विन् जि. शेट्टि, मुम्बयी

वासुदेवः शुनकं, गर्दभं, कुक्कुटीं च पालितवान् आसीत् । सः गर्दभं गृहस्य पृष्ठभागे बध्नाति स्म । शुनकं गृहस्य प्राङ्गणे बध्नाति स्म । यदा वासुदेवः कार्यं समाप्य गृहं प्रति आगच्छति स्म तदा शुनकः स्वामिनः स्वागतं कुर्वन् इव पुच्छं चालयति स्म । आनन्देन उत्प्लुत्य वासुदेवस्य समीपं गच्छति स्म । वासुदेवः अपि शुनकस्य विषये प्रीतिमान् आसीत् । सः शुनकम् उन्नीय, आलिङ्ग्य च लालयति स्म, शुनकेन सह क्रीडति स्म च । वासुदेवः शुनकाय बिस्किट्खाद्यं, रोटिकाखण्डान् च ददाति स्म । शुनकः तत् स्वीकृत्य आनन्देन गृहे सर्वत्र सञ्चरति स्म ।

वराकेण गर्दभेन महान् परिश्रमः करणीयः भवति स्म । वासुदेवः तैलयन्त्रे कलायेभ्यः तैलनिष्कासनार्थं गर्दभं योजयति स्म । इन्धनरूपेण दहनं कर्तुम् अपेक्षितानि काष्ठानि अरण्यतः गृहं प्रति वहति स्म गर्दभः । कृषिक्षेत्रतः गृहं प्रति तत्सम्बन्धीनि भारवन्ति वस्तूनि तेनैव नेतव्यानि आसन् ।

एकदा गर्दभः बहु दुःखितः अभवत् । स्वस्य दुःस्थित्या सः आत्मनि हीनभावनाम् अनुभवति स्म, शुनकस्य स्थितिं दृष्ट्वा असूयाम् अनुभवति स्म च । सायङ्काले सः स्वस्य दुःखं प्रकटयन् कुक्कुटीं शुनकं च उद्दिश्य - "भवतोः अत्र कार्यं न भवति, तथापि समीचीनं भोजनं प्राप्यते । अहं भारं वहन् भवामि, तथापि रुचिरहितम् आहारं प्राप्नोमि । हे भगवन् ! कदा वा एतस्य अन्यायस्य अन्त्यं स्यात् ?" इति अवदत् ।



तदा शुनकः आक्षेपम् अकरोत् - "यथा भवन्तौ चिन्तयतः तथा मम जीवनं सरलं नास्ति । रात्रौ गृहरक्षणार्थं मां मोचयन्ति । तस्मिन् समये केवलम् अहं बन्धनरहितः भवामि । अन्यथा आदिनम् अहं शृङ्खलया बद्धः भवामि । किन्तु भवन्तौ सर्वदा उच्छृङ्खलौ भवतः । भवन्तौ तु प्रपञ्चं पश्यतः । न केवलं तावत्, भवन्तौ सर्वदा स्वामिनः सान्निध्ये भवतः" इति ।





किन्तु गर्दभः एतत् न अङ्गीकृतवान् । कुक्कुटी हसन्ती उक्तवती - ''अस्माभिः स्वकर्तव्यं करणीयम् । अहम् अण्डानि स्थापयामि । किन्तु तानि सर्वाणि स्वामी नयति । अण्डस्थापनं मम कार्यम् । ततः नयनं तु स्वामिनः । तथापि अहं मम कार्येण आनन्दम् अनुभवामि । इतरेषां विषये असूया न दर्शनीया इति केवलं जानामि अहम्'' इति ।

किन्तु एकदा गर्दभः शुनकस्य विषये असूयाभावं प्राप्तवान् आधिक्येन । अतः सः गृहं प्रविश्य पुच्छं चालयन् स्वामिनं परितः भ्रमणम् आरब्धवान् । सः वासुदेवस्य पादं लेढुं प्रयत्नं कृतवान् । वासुदेवस्य अङ्के उपवेष्टुम् अपि प्रयत्नं कृतवान् । किन्तु सः न शक्तः । शुनकः यथा करोति तथा गर्दभः कर्तुम् इच्छति स्म । सः स्वामिनं तोषयित्वा सुखेन जीवनं कर्तुम् इच्छति स्म ।

किन्तु तस्य उन्मत्तव्यवहारेण वासुदेवः नितरां क्रुद्धः अभवत् । यतः स्वामिनं परितः भ्रमण-समये गर्दभेन बहूनि वस्तूनि पातितानि, भञ्जितानि च । आसन्दाः उत्पीठिकाः च इतस्ततः अभवन् । पीठोपकरणानि अस्त-व्यस्तानि अभवन् । वासुदेवस्य वस्त्राणि पङ्कसिक्तानि । वासुदेवः किञ्चित्प्रमाणेन क्षतग्रस्तः अपि अभवत् ।

एतत्सर्वं दृष्ट्वा द्वौ सेवकौ धावन्तौ स्वामिनः साहाय्यार्थम् आगतवन्तौ । तौ दृढं दण्डद्वयं स्वीकृत्य गर्दभं सम्यक् ताडयित्वा गृहात् बहिः प्रेषितवन्तौ ।

गर्दभः पुनश्च दुःखितः अभवत् । तत् दृष्ट्वा कुक्कुटी अवदत् - ''मया उक्तं खलु । इतरेषाम् अनुकरणं न करणीयम्, इतरे इव भवितुं कदापि प्रयत्नः न करणीयः इति ? सर्वैः अपि जीवने किञ्चित् पात्रं निर्वोढव्यं भवति । तत् अस्माभिः निर्वोढव्यम् एव'' इति ।

गर्दभः दुःखेन शिर-श्चालनं कृतवान् । तेन सर्वम् अवगतम् आसीत् ।

विद्यमानेन एव तृप्तिः अनुभोक्तव्या ।

**कर्तव्यपालनं सदा श्रेयस्करम्**

# तत्र आसीत् वृक्षः एकः एव !


कार्तिकरामस्वामी
चेन्नै


आशीष जि. शेट्टि
मुम्बयी

तच्च २९८९ तमं वर्षम् । डिसेम्बर्-मासस्य ३१ तमं दिनम् । तदनन्तर-दिने नूतनवर्षस्य नवसहस्रकस्य च आरम्भः । सायम् अष्टवादनसमयः । लण्डन्नगरस्य आकाशः स्फोटिका-प्रकाशेन विविधदीपप्रकाशेन च विराजते । रोकिः वातायनस्य समीपे तिष्ठति । तस्य मनसि विचारतरङ्गाः ।

तस्य माता तदीयविमनस्कतां दृष्ट्वा पृष्टवती - ''वत्स ! किं चिन्तयन् अस्ति भवान् ?'' इति ।

रोकिः अवदत् - ''मम कलाध्यापकः मां सूचितवान् यत् वृक्षस्य चित्रं लेखनीयं मदीय-सङ्गणके इति । किन्तु वृक्षः नाम किम् ?'' इति ।

''रोके ! आदौ भवान् जीवसत्त्वस्य गुलिकां सेवताम् । ततः अहं सर्वं कथयिष्यामि ।''

रोकिः एतत् अङ्गीकृत्य गुलिकां सेवित्वा मातुः पार्श्वे उपविष्टवान् । ''मातः ! वृक्षविषये मां कथयतु विस्तरेण'' इति अवदत् च ।

माता वृक्षस्य लक्षणानि वक्तुम् उद्युक्ता जाता - ''वत्स ! भवतः प्रपितामहस्य मुखात् एतत्सर्वं श्रुतं मया । वृक्षः प्रत्यक्षं तु कदापि न दृष्टः । भवतः प्रपिता-महेन अपि वस्तुतः वृक्षः सजीवः न दृष्टः । किन्तु लण्डन्वस्तुसङ्ग्रहालये तेन दृष्टः । वृक्षाणां प्रकाण्डाः, शाखाः, पर्णानि च भवन्ति इति श्रूयते । पर्णानि हरित-वर्णीयानि । प्रकाण्डाः धूसरवर्णीयाः । सहस्रा-धिकवर्षेभ्यः पूर्वं बहवः वृक्षजातयः आसन् इति शृणुमः । इदानीं तु एकः एव वृक्षः अस्ति, सोऽपि मृतः । एतस्य कारणं



मानवस्य अविचिन्तितव्यवहारः । वस्तुतः वृक्षाभावतः वृष्टिः नास्ति । अतः एव विज्ञानिनः कृत्रिमोपायैः वृष्टिं सृजन्तः सन्ति अद्य । जलं विना मानवः जीवितुं न अर्हति खलु ?''

''अम्ब ! अहम् एकस्मिन् पुस्तके पठितवान् यत् बहुपूर्वं शाकाहारिणः मांसाहारिणः चेति द्विविधाः जनाः भवन्ति स्म इति । ते के ? वृक्षाः पुनः स्रष्टुं किमर्थं न शक्याः ?''

''शाकाहारिणः नाम ये आहारार्थं सस्यादिकम् एव अवलम्बन्ते ते । मांसाहारिणः नाम आहारार्थं ये पशून् एव अवलम्बन्ते ते । सस्याभावतः शाकाहारिणः न सन्ति इदानीम् । वस्तुसङ्ग्रहालयस्य वृक्षस्य सन्ततिः वर्धयितुं न शक्या, यतः सः वृक्षः मृतः अस्ति ।''

रोकिः आसक्त्या सर्वं शृण्वन् आसीत् । माता कथनम् अनुवर्तितवती – ''अन्यच्च, सः यदि जीवेत् तर्हि अपि वृक्षसन्ततेः वर्धनं क्लेशाय एव । वृक्षे पुष्प-फलादीनि भवेयुः । फलस्य बीजं पक्षिणः नीत्वा अन्यत्र कुत्रापि पातयेयुः । चित्रपतङ्गादयः पुष्पात् पुष्पं गच्छन्तः परागस्पर्शं कुर्युः । अयम् एव वृक्षसन्तत्यभिवृद्धि-क्रमः ।''

''आसक्तिवर्धिका अस्ति एषा कथा । वृक्षाणाम् उपयोगः कथं भवति स्म प्राचीने काले ?'' इति अपृच्छत् रोकिः ।

''वृक्षाणां कारणतः वृष्टिः प्रभूततया भवति स्म । वृक्षः पक्षिप्रभृतीनां वासस्थानं भवति स्म । मानवाः अपि विविधकार्यार्थं तस्य उपयोगं कुर्वन्ति स्म....'' इत्येवं माता वृक्षाणां विविधोपयोगान् विवृतवती ।

वृक्षाणां समग्रविवरणं श्रुत्वा रोकिः नितरां सन्तुष्टः । सः मातरम् अपृच्छत् – ''अम्ब ! मम 'लेप्टोप्' सङ्गणके किं भवती वृक्षचित्रम् एकं लेखितुम् अर्हति ?''

''अस्तु, अवश्यं लेखिष्यामि । एतद्विषये सन्तोषकरी काचित् वार्ता अपि अस्ति भवतः । श्वः लण्डन्-वस्तुसङ्ग्रहालयं प्रति गमनं निश्चितम् । तत्र वयं वृक्षं द्रक्ष्यामः । भवान् अपि आ ग च्छ ति खलु ?''

''आम् अम्ब ! नितरां प्रियवार्ता एषा'' इति अवदत् रोकिः ।

**रक्ष्यतां वृक्षः भाविनां हितार्थम्**

## कुञ्चिका अन्विष्यताम्




वृत्ते स्थिता कुञ्चिका पेटिकायाः उद्घाटने उपकरोति । तस्याः प्रतिकृतिं किं भवन्तः अन्वेष्टुं शक्नुयुः ?

उत्तरम् – G

– ए. अनितारानी, थाणे

# वर्णानां परिस्फूर्तिः



एतस्याः सञ्चिकायाः निमित्तं चित्राणि रचयितुम् अर्हाणां चयनार्थं वयं यदा 'एकं चित्रं प्रेषयन्तु' इति सूचितवन्तः तदा अस्माकं कल्पना एव न आसीत् यत् चित्राणां महापूरः एव आगच्छेत् इति । भारतस्य विविधेभ्यः कोणेभ्यः बालैः प्रेषितानां चित्राणां राशिः एव आगच्छति स्म प्रतिदिनं पत्रालयद्वारा !! अस्माकं कार्यालये अपूर्वाणाम् उज्ज्वलानाम् आश्चर्यजनकानां चित्राणां परिस्फूर्तिः । एतेषां चित्राणाम् आधारेण कथाचित्राणि लेखितुं समर्थानां केषाञ्चित् एव चयने अस्माभिः कष्टम् एव अनुभूतम् । देशस्य विभिन्नभागीयाः पञ्च बालकलाकाराः अस्माभिः चेन्नै प्रति निमन्त्रिताः । तेषु दौर्भाग्यवशात् उभौ आगन्तुं न शक्तौ । येषां चित्राणाम् आधारेण अस्मत्कलाकारैः चयनं कृतं तानि चित्राणि अत्र दीयन्ते ।

अत्र बालकलाकाराणां भावचित्रं, तैः लिखितं चित्रं च प्रदर्श्यते ।

**अभिषेकः पि.**
हैदराबादीयः





तेन लिखितं चित्रम्

**अञ्जुला लुनिया**
मुम्बयीनगरीया



तया लिखितं चित्रम्



अशीषशेट्टि
मुम्बयीनगरीयः

तेन लिखितं चित्रम्





(चेन्नैनगरं प्रति
अनागतौ)



रश्मीरञ्जनदेवता
कटकृतः

प्रीतमदासः
उत्तर २४ परगणातः

# विशिष्टं चित्रद्वयम्

स्पर्धायां भागं गृहीतवत्सु उल्लेखार्हयोः उभयोः अल्पवयस्कयोः चित्रम् अत्र प्रदर्श्यते ।



एस्.वि.एस्.भीमेश्वरः
मुम्बयी, ७ वर्षीयः



श्रुति चौधरी
हैदराबाद, १० वर्षीया

बालाः ! सर्वे भवन्तः
अभिनन्दनार्हाः !

# दुष्टः नश्यति स्वकर्मणः परिणामात्


मुरलीधरशेट्टि
मङ्गलूरु

पूर्वं कदाचित् विशाले कस्मिंश्चित् वृक्षे उभौ पारावतौ निवसतः स्म । तौ शान्त्या सुखेन जीवतः स्म । तस्य वृक्षस्य मूलभागे कस्मिंश्चित् कोटरे कश्चन सर्पोऽपि निवसति स्म । सः सर्पः पारावतयोः सुखमयं जीवनं द्रष्टुं न शक्नोति स्म । सः तयोः सन्तोषं नाशयितुम् इच्छति स्म, तदर्थं योग्यम् अवकाशं प्रतीक्षते स्म च ।

एकदा पारावता अण्डद्वयं प्रसूतवती । एकस्मिन् दिने यदा पारावतौ आहारार्थं बहिः गतौ तदा सर्पः मन्दम् उपरि गत्वा अण्डद्वयम् अधः अपातयत् । ततः विना शब्दं प्रतिगत्य स्वकोटरे न्यवसत् च ।

किञ्चित्कालस्य अनन्तरं पारावतौ प्रत्यागतौ । नीडे ताभ्याम् अण्डद्वयं न दृष्टम् । पारावता रोदनम् आरब्धवती ।

तत् श्रुत्वा कोटरात् बहिः आगतः सर्पः तया दृष्टः । सा रुदती तं पृष्टवती - ''मित्र ! मम अण्डद्वयं केनापि दुष्टेन नाशितम् । केन कृतं स्यात् एतत् ? भवान् तु सर्वदा कोटरे एव निवसति खलु ? कोऽपि नूतनः किं मम नीडं प्रविष्टवान् ? कथं मम अण्डयोः नाशः जातः ? किं भवता किमपि लक्षितम् ?'' इति ।



तयोः अश्रु दृष्ट्वा सर्पः नितरां सन्तुष्टः । 'एते मां दोषकर्तारं न भावयेयुः' इति विचिन्त्य सः निर्णीतवान् यत् एतयोः पुरतः अन्यः कोऽपि दोषित्वेन वक्तव्यः इति ।

अतः सः अवदत् - ''भवतां प्रतिवेशी गृध्रः नीडं प्रविशन् दृष्टः मया । सः एव अण्डयोः नाशं कृतवान् । भवतोः विषये महती घृणा तस्य । अण्डनाशनं निवारयितुं मया प्रयासः कृतः । किन्तु सः मत्तः अपि बलवत्तरः आसीत्





इत्यतः मया किमपि कर्तुं सर्वथा न शक्तम् । अहम् असहायः आसं भगिनि ! क्षन्तव्यः अहम्'' इति ।

वृक्षस्य उपरि स्थित्वा एतत् सम्भाषणं गृध्रः अपि शृण्वन् अस्ति इति सर्पः न ज्ञातवान् एव । सर्वं श्रुत्वा क्रुद्धः गृध्रः झटिति अभिपत्य सर्पं नखैः बलात् गृहीत्वा दूरे अक्षिपत् । तेन सर्पः मृतः जातः ।

ततः प्रत्यागत्य गृध्रः सर्पस्य असत्यवक्तृताम्, तेन कृतम् अण्डयोः पातनं, वञ्चनापूर्ण-व्यवहारं च पारावतौ विस्तरेण निवेदितवान् ।

गृध्रः सत्यं वदति इति पारावतौ अवगतवन्तौ ।'ललाटलिखिता रेखा परिमार्ष्टुं न शक्यते' इति विचिन्त्य तौ मनःसमाधानं प्राप्त-वन्तौ । गच्छता कालेन तयोः दुःखं पूर्णतः शान्तम् । पारावता पुन अण्डानि प्रसूतवती । ततः शावकाः अपि उत्पन्नाः । ततः तौ सुखेन जीवनं कृतवन्तौ ।

दुष्टात् प्रतिवेशितः सर्पात् रक्षितवन्तं भगवन्तं तौ कृतज्ञतापूर्वकं स्मृतवन्तौ ।




## त्रयः शिक्षकाः

त्रयः शिक्षकाः मार्गे गच्छन्तः आसन् । तदा कस्याश्चित् महिलायाः धनस्यूतम् अपहरन् चोरः तैः दृष्टः । संस्कृताध्यापकः उच्चैः अवदत् – ''चोरः चोरः'' हिन्दी–अध्यापकः अवदत् – ''चोर् चोर्'' तदवसरे गणिताध्यापकः अवदत् – ''४२०, ४२०''

*– एम्.सि.निखिलेशः, बेङ्गलूरु*



*ग्राहकः* – एषः शुनकः स्वामिभक्तः इत्येतत् सत्यं किल ?

*आपणिकः* – अथ किम् ? मया एषः पञ्चवारं विक्रीतः । सर्वेषु अपि अवसरेषु अयं प्रत्यागतः एव ।

*– प्रशान्त पाण्डेयः, मुम्बई*

**यादृशं वपनं क्रियते तादृशं फलं प्राप्यते**

# मान्त्रिकवेणुः



सार्थकशोभन
शतपथी
कटक

पूर्वं सुमनः नाम कश्चन निर्धनः बालः आसीत् । तस्य गृहे मातामही एका एव आसीत्, नान्यः कोऽपि । सा परमवृद्धा आसीत् । अतः आहाराभावतः गृहे तदा तदा उपवासः करणीयः भवति स्म । यदा सा स्वस्था भवति स्म तदा अरण्यं गत्वा काष्ठानि संगृह्य विक्रीय गृहव्ययार्थं धनम् आनयति स्म ।

कदाचित् सा दीर्घकालं यावत् अस्वस्था जाता । अल्पवयस्कः सुमनः किमपि कर्तुं न शक्नोति स्म । किन्तु 'पितामह्याः साहाय्यं करणीयम् । एतस्याः दुस्स्थितिः अपसारणीया' इति तु सः इच्छति स्म ।

कदाचित् सः अरण्ये कस्यचित् वृक्षस्य अधः उपविश्य अश्रूणि स्रावयन् आसीत् । तदा काचित् सुन्दरी तस्य पुरतः प्रत्यक्षीभूय अवदत् - ''अहं बहुभ्यः दिनेभ्यः भवन्तं पश्यन्ती अस्मि । भवान् नितरां विषण्णः दृश्यते । भवतः दुःखस्य कारणं ज्ञातुं देवः मां प्रेषितवान् अस्ति'' इति ।

सुमनः सुन्दरस्त्रियं दृष्ट्वा आश्चर्यचकितः । सः स्वस्य समग्रां दुस्स्थितिं विस्तरेण तां निवेदितवान् । पितामह्याः साहाय्यं कर्तुं किञ्चित् धनम् आवश्यकम् इत्यपि उक्तवान् सः ।



सुमनस्य स्थितिं दृष्टवत्याः तस्याः सुन्दर्याः हृदयं करुणापूर्णं जातम् । सा तस्मै एकं मान्त्रिकवेणुं दत्त्वा उक्तवती - ''भवान् दुष्टानां पुरतः यदा एतं वादयति तदा ते शिलामयतां यान्ति, द्वितीयवारं यदा वाद्यते तदा ते मानवरूपतां प्राप्नुवन्ति । एतस्य साहाय्येन भवान् धनं सम्पादयितुम् अर्हति । किन्तु स्मर्तव्यं यत् सत्कार्यार्थम् उपयुक्तं चेदेव एतत् सहायकं भवति, दुष्टकार्यार्थम् उपयुक्तं चेत् तु एतत् उपकारकं न भवति'' इति ।



एतस्य प्राप्त्या सुमनः सन्तुष्टः । सः लोकस्य उपकारं कर्तुम् इच्छति स्म । वेणुना सह गच्छन् सः अरण्ये अश्वानां खुरपुटध्वनिं श्रुतवान् । सः गुल्मेषु निलीय स्थितवान् । केचन लुण्ठाकाः काञ्चित् सुन्दरबालिकाम् अपहृत्य तत्र आगताः आसन् ।

सुमनः ज्ञातवान् यत् एषा राजकुमारी एव इति । सः तां रक्षितुम् इष्टवान् । सः उच्चैः वेणुं वादितवान् । दुष्टाः सर्वे लुण्ठाकाः शिलामयाः जाताः । सः राजकुमारीं सूचितवान् यत् भवती राजभवनं गत्वा कांश्चन सैनिकान् प्रेषयतु इति । सा राजभवनं गत्वा पितरं प्रवृत्तं समग्रम् उक्तवती । राजा तया सह कांश्चन सैनिकान् प्रेषितवान् । सैनिकाः यदा उपस्थिताः तदा सुमनः पुनरपि वेणुं वादितवान् । लुण्ठाकाः सजीवाः जाताः । सैनिकैः ते सर्वे गृहीताः । राजकुमारी सुमनं सूचितवती यत् राजभवनम् आगच्छतु इति ।

सा पितुः पुरतः तस्य परिचयम् उक्त्वा मान्त्रिकवेणुविषयम् अपि निवेदितवती ।

सर्वं श्रुत्वा राजा प्रभावितः । 'एषः बालः चतुरः धीरः बुद्धिमान् च दृश्यते । अपूर्वः मान्त्रिकवेणुः अपि अस्ति एतस्य समीपे । एषः निश्चयेन अस्माकं देशस्य उपकारकः भवेत्' इति सः अचिन्तयत् । किन्तु सः तं बालकं परीक्षितुम् अपि इच्छति स्म ।

अतः सः अवदत् - ''कश्चित् मम कोषागारतः सुवर्णरत्नादीनि चोरयति अद्यापि । सः कः इति मया अद्यावधि न ज्ञातम् । चोरस्य अन्वेषणे साहाय्यं करोतु भवान्'' इति ।

तस्यां रात्रौ राजा सुमनश्च धनागारसमीपे निलीय स्थितवन्तौ । कोषाधिपतिः सेनाधिपतिः च महान्तं स्यूतम् आनीय आगत्य सुवर्णरत्नादिकं कोषागारतः स्वीकृत्य गन्तुम् उद्युक्तौ दृष्टौ ताभ्याम् ।

तदा सुमनः स्वस्य वेणुं वादितवान् । अतः तौ चौरौ शिलामयतां गतौ । राजा रक्षकभटान् आहूतवान् । सुमनः पुनरपि वेणुं वादितवान् । तदा चौरौ सजीवौ जातौ । रक्षकभटाः तौ बद्धवन्तः ।

एतया घटनया राजा नितरां सन्तुष्टः । सः सुमनम् आस्थाने एव स्थापयित्वा सम्यक् पोषितवान् । शासनविषयान् अपि सर्वान् ज्ञापितवान् सः ।

यदा राजकुमारी तं परिणीतवती तदा सः प्रधानमन्त्री जातः । शासने योग्यं साहाय्यं कृत्वा गच्छता कालेन राज्यस्य उत्तराधिकारी अपि जातः सः ।

**सत्कार्यं क्रियताम्, सद्भावः अर्ज्यताम्**

# मैत्री



सबीना यास्मिन्
दक्षिण २४ परगणाः

कल्कत्तानगरात् अनतिदूरे स्थिते लघुग्रामे जाफरः निवसति स्म मात्रा लज्जुवर्यया, भगिन्या नीलिमया च सह। तरुणेन जाफरेण एव धनार्जनं कृत्वा कुटुम्बपोषणं करणीयम् आसीत्। यतः कुटुम्बस्य आधारस्तम्भभूतः तदीयः पिता पञ्चभ्यः वर्षेभ्यः पूर्वं दिवं गतः आसीत्।

जाफरः नगरे निवसतः रमापतिवर्यस्य गृहे उद्यानपालनकार्यं करोति स्म। रमापतिवर्यः धनिकः। स्वगृहस्य पुरतः सुन्दरम् उद्यानं सदा पोषयितुम् इच्छति स्म सः। 'सुदैववशात् एव मया एषः उद्योगः प्राप्तः। मम पिता माम् एतत् कार्यं यदि न पाठितवान् स्यात् तर्हि अहम् एतम् उद्योगं न प्राप्तवान् स्याम्' इति चिन्तयति स्म जाफरः।

रमापतिवर्यस्य पत्नी मौसुमी। सा अपि उत्तमस्वभावा एव। 'मम सौभाग्यवशात् एव एतादृशौ स्वामिनौ प्राप्तौ' इति चिन्तयन् एव नगरं गतवान् जाफरः।

रमापतिवर्यः द्वारसमीपे एव आसीत्। ''सुप्रभातम् आर्य!'' इति उक्त्वा विनयेन नमस्कृत्य अवदत् जाफरः - ''अस्माकम् उद्यानस्य सौन्दर्यं दिने दिने वर्धमानम् अस्ति'' इति।

रमापतिवर्यस्य पार्श्वे कश्चन तरुणः आसीत्। रमापतिः तं प्रदर्शयन् - ''जाफर! एषः मम पुत्रः अर्जुनः। नगरे छात्रावासे तिष्ठन् पठति। विरामकारणतः गृहम् आगतः। कतिचन दिनानि सः अत्र स्थास्यति। तं भवान् 'छोटाबाबु' इति सम्बोधयितुम् अर्हति'' इति उक्त्वा जाफरं प्रदर्शयन् अवदत् - ''एषः अस्माकम् उद्यानपालनकः जाफरः'' इति।

उभयोः अपि बालकयोः नेत्राभ्यां क्षणकालं सम्भाषणं कृतम् इव। तावता रमापतिवर्यः अवदत् - ''अर्जुन! अन्तः गच्छतु। मया प्रातः एकं पुस्तकं दत्तं किल! तत् पठतु तावत्'' इति।

अनन्तरं सः जाफरम् उद्दिश्य उद्यानकार्यविषये कांश्चन अंशान् सूचितवान्।



अर्जुनः प्रकोष्ठगमनात् पूर्वम् अवदत् - ''तात ! अहं तेन सह किञ्चित् सम्भाष्य पठितुं गच्छामि । तस्य किञ्चित् साहाय्यं कृत्वा...''

रमापतिवर्यः अर्जुनस्य वचनं मध्ये एव खण्डयन् अवदत् आदेशस्वरेण - ''अर्जुन ! मया उक्तं खलु अन्तः गत्वा पठतु इति । गच्छतु तावत्'' इति ।

अर्जुनः प्रतिवचनं विना अन्तः गतवान् । जाफरः अपि स्वामिना आदिष्टानि कार्याणि कर्तुम् उद्यानं गतवान् ।

जाफरः सायङ्कालपर्यन्तं परिश्रमेण कार्यं कृतवान् । कार्यकरणसमये तस्य मनसि भावः भवति स्म - 'अर्जुनः मत्समानवयस्कः एव अस्ति । सः उत्तमः बालकः इव भाति । अहं तेन सह सम्भाषणं कर्तुम् इच्छामि । तस्य मैत्रीं सम्पादयितुम् इच्छामि । किन्तु एतत् असाध्यम् इति भाति' इति ।

जाफरः चिन्तयति स्म - 'यद्यपि आवयोः वयः समानं, तथापि धनिकनिर्धनभेदरूपिणी भित्तिः आवयोः मध्ये अस्ति । अर्जुनः तु स्वामिनः पुत्रः । अहम् एतस्य गृहस्य सेवकः । अतः आवयोः मैत्री असम्भवा इति ।

सायं जाफरः स्वगृहं गन्तुं यावत् उद्युक्तः तावता अर्जुनः मन्दहासपूर्वकं जाफरसमीपम् आगतवान् । ''जाफर ! क्षन्तव्यः अहम् । प्रातः भवता सह सम्भाषणं कर्तुं न शक्तं मया । भवतः मैत्रीम् अपेक्षमाणः आगतवान् अस्मि । किम् आवयोः मैत्री सम्भवेत् ?'' इति पृष्टवान् अर्जुनः ।

जाफरः किं वा उत्तरं वदेत् ? सः आश्चर्येण स्तब्धः सन् मौनम् आश्रितवान् । तदा अर्जुनः जाफरस्य हस्तं गृहीत्वा पुनः अवदत् - ''आवयोः मैत्री भवतः सम्मता खलु ? अहम् आत्मीयं सुहृदम् इच्छामि । छात्रावासे मम तादृशः सुहृत् कोऽपि नास्ति'' इति ।

ततः तयोः मैत्री आरब्धा । बहुषु विषयेषु तयोः समाना आसक्तिः आसीत् । वार्तालापं कर्तुं बहवः विषयाः भवन्ति स्म । अतः सप्ताहेषु अतीतेषु तयोः मैत्री गाढतां गता । अर्जुनस्य माता मौसुमी एतां मैत्रीं जागरूकतया पश्यन्ती आसीत् । सेवकेन सह स्वपुत्रस्य मैत्रीं सा न



इच्छति स्म । रमापतिवर्यस्य मित्राणां पुत्रैः सह क्रीडितुं न गच्छति स्म अर्जुनः । सः जाफरेण सह संल्लपितुम् इच्छति स्म ।

एकस्मिन् दिने सा स्वस्य असम्मतिं शब्दैः ज्ञापितवती । तदा अर्जुनः अवदत् - ''अम्ब ! सः उत्तमः बालकः इति भवत्या एव उक्तम् आसीत् खलु ? तम् अहं बहु इच्छामि'' इति ।

एकदा अर्जुनः जाफरस्य ग्रामं द्रष्टुम् इष्टवान् । ततः तौ ग्रामं गतौ । जाफरस्य

**मैत्री न जानाति विघ्नान्**

माता भगिनी च अर्जुनस्य मैत्रीपूर्णं व्यवहारं बहुधा इष्टवत्यौ । तस्य गृहस्य आहारः अर्जुनाय विशेषतः अरोचत । समग्रं दिनं सन्तोषेण यापितम् अभवत् ।

अपराह्णे जाफरः उक्तवान् – ''शीघ्रं प्रतिगन्तव्यम् अस्माभिः । अन्यथा विलम्बः स्यात्'' इति । 'अर्जुनः गृहं प्रति नीतः यत् तदर्थं रमापतिवर्यः कुपितः भवेत्' इति भीतिः आसीत् जाफरस्य अन्तरङ्गे । 'गृहतः प्रस्थानात् पूर्वं रमापतिवर्यस्य तत्पत्न्याः वा अनुज्ञा न स्वीकृता' इति आतङ्कः अपि तं बाधते स्म ।

जाफरेण यत् आशङ्कितं तदेव प्रवृत्तम् । रमापतिवर्यः तत्पत्नी च कोपेन एव एतयोः आगमनं प्रतीक्षमाणौ गृहस्य द्वारस्य समीपे एव स्थितौ आस्ताम् । सकुशलम् आगतम् अर्जुनं दृष्ट्वा तृप्तः अपि रमापतिवर्यः जाफरं दृष्ट्वा क्रोधेन – ''कुत्र गतम् आसीत् ? मम अनुज्ञां विना मम पुत्रः कुत्र नीतः आसीत् भवता ? यत् स्फुरति तत् क्रियते भवता । स्वेच्छाचारः भवतः । किं वक्ता प्रष्टा वा कोऽपि नास्ति इति भवता चिन्त्यते ? निर्गच्छतु इतः । इतःपरं मम गृहस्य प्रवेशः मास्तु भवतः'' इति अतर्जयत् ।

क्षणकालं तत्र मौनं प्रसृतम् आसीत् । तत् मौनं भञ्जयन् अवदत् अर्जुनः – ''तात ! अत्र न



कोऽपि दोषः जाफरस्य । अहम् एव तस्य ग्रामं द्रष्टुम् इष्टवान् । तत्र सन्तोषेण कालः यापितः मया । तात ! जाफरस्य विषये कोपः मास्तु । तम् इतः मा प्रेषयतु कृपया'' इति ।

अर्जुनस्य प्रार्थना सर्वथा तिरस्कृता रमापतिवर्येण । सः हस्तं गृहीत्वा आकृष्य जाफरं गृहात् बहिः अप्रेषयत् । अर्जुनः उच्चैः रोदिति स्म । स्वामी तर्जयति चेदपि प्रतिवचनं किमपि अवदन् शिरः अवनमय्य ततः निर्गतः जाफरः ।

तत्समनन्तरम् एव अर्जुनः पतितः भूमौ । मौसुमी दिग्भ्रान्ता भीता च । रमापतिवर्यः पुत्रं विसंज्ञं दृष्ट्वा पत्नीम् उद्वेगेन आदिशत् – ''मौसुमि !



*रोहितः* – बलवत्तरः जनः कः इति किं भवान् जानाति ?

*रविः* – यातायातनियन्त्रकः आरक्षकः एव बलवत्तरः । यतः सः एकेनैव हस्तेन सर्वाणि यानानि नियन्त्रयति ।

*– बिजेन्द्रसिंहः, कोटा*

झटिति वैद्यं चटर्जीवर्यम् आनाययतु'' इति ।

वैद्यः आगत्य परीक्षितवान् । महान् ज्वरः अर्जुनं बाधते स्म । वैद्यः एकं सूच्यौषधं दत्तवान् । अनन्तरदिने ज्वरः किञ्चित् न्यूनः जातः । अर्जुनः अस्पष्टतया किमपि वदति स्म इव । ''रमापतिवर्य ! किं जातम् ? अर्जुनः कमपि आघातं प्राप्तवान् इव दृश्यते !'' इति वैद्यः यावत् वदन् आसीत् तावता अर्जुनः उच्चैः अवदत् - ''तात ! जाफरं मा प्रेषयतु कृपया'' ततः अर्जुनस्य अस्पष्टकथनम् अनुवृत्तम् ।

वैद्यः रमापतिवर्यम् अवदत् - ''एषः कमपि मानसिकाघातं प्राप्तवान् इति तु सुस्पष्टम् । सः जाफरः कः ? शीघ्रं तम् आनाययतु'' इति ।

''अचिरात् एव प्रत्यागमिष्यामि'' इति पत्नीम् उक्त्वा रमापतिवर्यः जाफरस्य ग्रामं प्रति गतवान् । सः जाफरस्य गृहं गत्वा - ''क्षम्यताम् । कोपवशात् मया किम् उक्तं, किं कृतम् इति एव न ज्ञायते । कृपया मया सह आगच्छतु । अर्जुनस्य प्राणरक्षणं भवदधीनम्'' इति जाफरं निमन्त्रितवान् ।

स्वामिना सहैव गतः जाफरः अर्जुनस्य शिरसः पार्श्वे स्थित्वा -''अर्जुन ! अहं जाफरः उपस्थितोऽस्मि । नेत्रे उन्मीलयतु मित्र ! अहम् आगतोऽस्मि'' इति अवदत् ।

प्रियं वचनं श्रुत्वा अर्जुनः मन्दं नेत्रे उन्मीलितवान् । जाफरः पुनरपि तम् आहूतवान् । तदा अर्जुनः सम्यक् सचेतनः जातः । सः जाफरं दृष्ट्वा मन्दहासं प्रकटितवान् । रमापतिवर्यः, मौसुमिः, लज्जूमाता, नीलिमा च निरातङ्कं दीर्घं निश्श्वसितवन्तः । सर्वेषां मुखे स्थिता चिन्तारेखा अपगता ।

एतस्याः घटनायाः अनन्तरं स्थितिः नाटकीयशैल्या परिवृत्ता । रमापतिवर्यः जाफरं सूचितवान् यत् भवान् सपरिवारं मम गृहस्य उपगृहे निवसतु इति । जाफरेण एतत् अङ्गीकृतम् । जाफरः नीलिमा च विद्यालयं प्रति गमनम् अपि आरब्धवन्तौ अर्जुनेन सह ।

इदानीम् अर्जुनस्य गृहे सुखसन्तोषादयः विलसन्ति । ततः कापि घटना अर्जुनजाफरयोः मैत्रीं विघटयितुं शक्ता न जाता ।

**मैत्री न जानाति विघ्नान्**

## सङ्ख्याक्रीडा

एतस्मिन् कारण्डवे स्थिताः सङ्ख्याः अन्विष्यन्ताम् ।



– ए. अनितारणि, थाणे

# अशक्यप्रत्यागमनः पर्वतः



पूजा चौधरी,
विशाखपत्तनम्



अञ्जु लुनिया,
मुम्बयी

एकदा जपानदेशे कश्चन नियमः कृतः - 'ये वृद्धाः सप्ततिवर्षेभ्यः अपि अधिकवयस्काः सन्ति, ते कश्चित् पर्वतं प्रति नीत्वा तत्रैव परित्यक्तव्याः' इति । तादृशाः वृद्धाः बलहीनाः, अक्षमाः, चिन्तने असमर्थाः च भवन्ति इति राज्ञः अभिमतम् आसीत् ।

तस्मिन् देशे उभौ सहोदरौ निवसतः स्म - इचिरः चिरः चेति । तौ स्व-कृषिक्षेत्रे बहु परिश्रमेण कार्यं कुरुतः स्म । सायं तयोः प्रत्यागमनसमये वृद्धा माता सुमी मन्दहासपूर्वकं स्वागतार्थं तिष्ठति स्म ।

तौ सर्वदा वातायनद्वारा दूरस्थं हिमाच्छादितं पर्वतं पश्यन्तौ दीर्घं निश्वसतः स्म ।

एकदा सायं सुमी पुत्रौ उद्दिश्य उक्तवती - ''वत्सौ ! अहम् अद्य सप्ततिवर्षीया अभवम् । अतः एतस्य प्रदेशस्य नियमानुसारम् अशक्य-प्रत्यागमनं पर्वतं प्रति मां नयताम्'' इति । तत्र गतवन्तः वृद्धाः प्रत्यागन्तुं न शक्नुवन्ति स्म इत्यतः तस्य पर्वतस्य नाम जातम् आसीत् 'अशक्य-प्रत्यागमनः पर्वतः' इत्येव ।



एतत् श्रुतवतोः पुत्रयोः मुखं निस्तेजस्कं जातम् । तौ रोदनम् आरब्धवन्तौ । सुमी तयोः सान्त्वनं कृतवती - 'नियमः केनापि न उल्लङ्घनीयः' इति । परेद्यवि सा स्वस्य वस्त्राणि स्वीकृतवती । अन्तिमवारं पाकं सज्जीकृतवती । ततः प्रयाणम् आरब्धम् । सुदीर्घं प्रयाणम् आसीत् तत् । अन्ते ते पर्वतस्य मूलं प्राप्तवन्तः । यथा यथा ते पर्वतम् आरूढवन्तः, तथा तथा सुमी मार्गे शाखाः पातयन्ती गतवती । प्रत्यागमनसमये पुत्राभ्यां मार्गः अभिज्ञातव्यः इति तस्याः उद्देशः आसीत् ।

ते निश्चितस्थानं प्राप्तवन्तः । पुत्रौ मातरम् आप्रच्छनवचनानि उक्त्वा झटिति परावृत्य भारभूतं हृदयं स्वीकृत्य प्रस्थितवन्तौ ।

अन्धकारः प्रसृतः । हिमपातः आरब्धः । तौ वेगेन अधः धावतः स्म । घनं हिमं पतति स्म । तस्मात् सर्वं हिमाच्छादितं जातम् । अतः तौ मार्गभ्रष्टौ जातौ । तौ पुनश्च पर्वतारोहणम् आरब्धवन्तौ । मध्ये मध्ये मातरम् आह्वयतः स्म तौ । तया पुत्रयोः ध्वनिः श्रुतः ।

सा परिष्कृतं मार्गं दर्शयन्ती अधः आगतवती । अतः विना क्लेशं तौ गृहं प्राप्तवन्तौ ।

'माता पुनः न प्रेषणीया' इति तौ निश्चितवन्तौ । तौ गृहस्य पृष्ठभागे तां गोपितवन्तौ । ग्रामजनाः, शासनपालकाः वा तां यथा न पश्येयुः तथा ताभ्यां गोपिता आसीत् सा ।

एकदा तस्य देशस्य राज्ञा काचित् घोषणा कृता – 'भस्मनिर्मिता रज्जुः आनेतव्या, यैः न शक्यते तैः दण्डः अनुभोक्तव्यः' इति । सर्वाः अपि प्रजाः किङ्कर्तव्यतामूढाः अभवन् ।

इचिरः, चिरः च एतदर्थं मातुः समीपं गतवन्तौ । सा हसन्ती उक्तवती – ''तत् तु सुकरम् । लवणजलेन रज्जुः आर्द्रीक्रियताम् । लोहस्य पत्रके रज्जुं स्थापयित्वा दह्यताम् । रज्जुः भस्मीभविष्यति । किन्तु लवणकारणतः रज्ज्वाः आकारः यथापूर्वं स्थास्यति'' इति । तौ तदनुगुणम् एव कृतवन्तौ ।

ऋते ताभ्यां सहोदराभ्याम्, अन्येन केनापि तत् कार्यं न कृतम् आसीत् । इतरैः सर्वैः दण्डः भोक्तव्यः अभवत् ।

राज्ञा सूचितं द्वितीयं कार्यम् आसीत् – 'शङ्खद्वारा सूत्रं बहिः आनेतव्यम्' इति । सुमी तदर्थम् उपायं जानाति स्म । सा उक्तवती – ''एकां पिपीलिकाम् आनीय सूत्रेण बद्ध्यताम् । सा पिपीलिका शङ्खस्य ऊर्ध्वभागे स्थाप्यताम् । अनन्तरम् अपरस्मिन् भागे कतिचन तण्डुलाः स्थाप्यन्ताम् । तण्डुलेन आकृष्टा पिपीलिका सूत्रसहितं शङ्खस्य अपरभागात् बहिः आगच्छति'' इति । तथा सज्जीकृतं शङ्खं स्वीकृत्य तौ राज्ञः समीपं गतवन्तौ । तयोः कार्यं दृष्ट्वा राजा अत्यन्तम् आनन्दम् अनुभूतवान् ।

तृतीयं कार्यं – 'ताडनं विना नादकरणयोग्यं मृदङ्गम् आनेतव्यम्' इति । सहोदरौ गृहं





गतवन्तौ ।

सुमी एतस्यापि परिहारं जानाति स्म । सा उक्तवती – ''उभयभागे अपि उद्घाटितं किञ्चित् करण्डकं स्वीकुरुताम् । तत्र वृत्ताकारकं चर्म योज्यताम् । पूर्णरूपेण आच्छादनात् पूर्वं कतिचन मधुमक्षिकाः अन्तः योज्यन्ताम् । यदा राजा वाद्यम् उन्नयति तदा विचलिताः मक्षिकाः इतस्ततः डयमानाः चर्मभागं घट्टयन्ति । तदा नादः श्रूयते'' इति ।

चिरः इचिरः च सम्भूय यत् कार्यं साधितवन्तौ आस्तां तद् दृष्ट्वा राजा अतीव प्रसन्नः अभवत् । राजा यत् पारितोषिकं दातुम् इष्टवान् तत् निराकृतवन्तौ तौ । ''एतत् पारितोषिकं प्राप्तुम् आवां न अर्हौ । आवयोः माता तत् प्राप्तुम् अर्हति'' इति उक्तवन्तौ । 'माता सुमी सप्ततिवर्षीया अपि आवाभ्यां सह गृहे एव तिष्ठति' इत्यपि ताभ्यां सूचितम् । नियमभङ्गः कृतः इति अङ्गीकृतम् आसीत् ताभ्याम् ।

एतत् श्रुत्वा राजा न केवलं तौ क्षान्तवान्, अपि तु तं नियमं प्रतिस्वीकृतवान् । प्रजाभिः दत्तं दण्डशुल्कम् अपि प्रत्यर्पितवान् सः ।

सुमी राज्ञः आप्तमन्त्रणकारिणी अभवत् । राजा गौरवेण तस्याः सम्माननं कृतवान् ।

**बुद्धिमत्तानिमित्तं आदरणीयाः ज्येष्ठाः**

# भारतम् अवगम्यताम्

## प्रश्नोत्तरम्

नवम्बर्मासस्य १४ दिनाङ्कः बालदिनत्वेन आचर्यते भारते । तस्मिन् मासे बालाः स्वस्य उपस्थितिं केनचित् क्रमेण स्मारयन्ति । भारतीयेतिहासे पुराणे च बालान् अधिकृत्य विविधाः कथाः श्रूयन्ते । तासां वैशिष्ट्यम् एव अत्र कारणम् । अधः केचन प्रश्नाः दत्ताः सन्ति । प्रश्नगतान् बालान् किम् अभिज्ञातुं शक्नुयुः भवन्तः ?

१. पितुः वानप्रस्थस्वीकारस्य अनन्तरं पुत्रः सिंहासनम् आरूढः सन् ३६००० वर्षाणि यावत् राज्यपालनं कृतवान् । ततः सः पितुः वासभूमिं लोकं गतवान् । सः राजा कः? तस्य पिता च कः?

२. पुत्रसन्तानम् इच्छन्तं संन्यासिनं देवः पृष्टवान् - ''भवान् दीर्घजीविनं दुश्चरित्रं पुत्रम् इच्छति, उत सच्चरित्रम् अल्पजीविनम् ?'' इति । संन्यासी द्वितीयं विकल्पम् एव इष्टवान् । सः पुत्रः कः ? संन्यासिनः च नाम किम् ?

३. असुरराजः कश्चन स्वपुत्रस्य मारणार्थम् अनेकान् उपायान् कृतवान् । तथापि यस्मिन् सः बालः भक्तिमान् आसीत् सः देवः तं रक्षितवान् । तस्य बालस्य नाम किम् ? संरक्षकस्य देवस्य च नाम किम् ?

४. सप्तवर्षीयस्य बालस्य पिता कश्चित् यागं कुर्वन् आसीत् । यागाङ्गतया पित्रा गावः विप्रेभ्यः दत्ताः । ताः दुग्धदोहाः जग्धतृणाः च आसन् । 'मां कस्मै ददाति ?' इति पुत्रः पृष्टवान् । पिता अवदत् - 'मृत्यवे' । ततः यमः तस्य बालस्य पुरतः प्रत्यक्षीभूय आत्मतत्त्वं बोधितवान् । सः बालः कः ? तस्य पितुः च नाम किम् ?

५. केचन राजकुमाराः मृगयार्थं गताः । तेषां शुनकः कश्चित् वन्यबालकं दृष्ट्वा भषणम् आरब्धवान् । भषणं स्थगयितुं सः वन्यबालः बाणैः शुनकस्य मुखं पूरितवान् । एतत् दृष्ट्वा आश्चर्यचकिताः राजकुमाराः - 'भवतः गुरुः कः?' इति यदा पृष्टवन्तः तदा तेन तेषां गुरोः एव नाम उक्तम् । सः बालः कः ? ते राजकुमाराश्च के ?

६. सिंहस्य दन्तान् गणयन् बालः कश्चन राज्ञा दृष्टः । ततः तेन ज्ञातं यत् अयं बालः ममैव पुत्रः इति । सः बालः कः ? तस्य पितुः नाम च किम् ?

*(उत्तरम् अग्रिमे मासे )*

*(अक्टोबर्मासस्य उत्तराणि अपि डिसेम्बर्मासे एव प्रकाश्यन्ते । )*

# भारत-गौरव-गाथा

**महासंस्कृत्याः स्थूलदर्शनम्, प्रतियुगं सत्यान्वेषणार्थं कृताः विशेषयत्नाः**

## २२. देवे विश्वासवन्तः तद्रहिताश्च



"भवता किमर्थं तां समूहचर्चागोष्ठीं प्रति गन्तव्यम् आसीत् ? अहं तान् कांश्चन जानामि । ते स्वज्ञानविषये वृथाभिमानिनः । वस्तुतः ते किमपि न जानन्ति" इति उक्तवती जयश्रीः । सा देवनाथवर्यस्य स्नुषा । पुत्रेण सन्दीपेन किं न करणीयम् आसीत् इति बोधयन्ती आसीत् सा ।

"अम्ब ! मया तेषां वादः न अङ्गीकृतः । मया विरोधः प्रकटितः । यदि सृष्टिः स्यात् तर्हि सृष्टिकर्ता कश्चन स्यादेव इति मया प्रतिपादितम् । भित्तिस्थं चित्रं प्रदर्श्य – 'चित्रं चित्रकारस्य सद्भावं यथा निरूपयति तथा सृष्टिः सृष्टिकर्तारम्' इति मया उक्तम्" इति उक्तवान् सन्दीपः ।

तावता देवनाथवर्यः तत्र आगतवान् । माता-पुत्रयोः चर्चाविषयः कः इति तेन अवगतम् । सन्दीपस्य अध्यापकः कश्चन नास्तिकः आसीत् । सः देवस्य अस्तित्वं न अङ्गीकरोति स्म । स्वगृहं प्रति तदा तदा मित्राणि छात्रान् च आहूय नास्तिकसिद्धान्तविषये चर्चां करोति स्म सः ।

"सन्दीप ! चित्रम् अस्ति चेत् तन्निर्माता चित्रकारोऽपि स्यादेव इत्येषः भवतः तर्कः विज्ञानिनोः किञ्चन सम्भाषणं स्मारयति । पूर्वं कश्चन विज्ञानी आसीत् । सः देवस्य अस्तित्वे विश्वासवान् । तस्य मित्रं तद्विरोधी । तयोः चर्चा भवति स्म सदापि । एकदा नास्तिकः विज्ञानी यदा स्वप्रकोष्ठं प्रविष्टवान् तदा सौरमण्डलस्य एकां लघुप्रतिकृतिम् स्वस्य उत्पीठिकायाः उपरि दृष्टवान् ।

*अनुवर्तमाना कथामाला*



"अहो, सुन्दरम् एतत् । केन निर्मितम् एतत् ?" इति प्रश्नम् अकरोत् सः ।

"न केनापि । स्वयम् उद्भूतं तत्" इति उत्तरं दत्तवान् अपरः विज्ञानी ।

"भवान् विनोदवचनं वदति । केन निर्मितम् इति वदतु । अहम् अपि एकां प्रतिकृतिं क्रेतुम् इच्छामि" इति अवदत् नास्तिकविज्ञानी ।

"मित्र ! वास्तविकं सौरमण्डलं यदि केनापि सृष्टं न स्यात्, कर्तारं विनैव यदि तत् उद्भूतं स्यात् तर्हि तस्य प्रतिकृतिरूपम् एतत् लघुसौरमण्डलम् अपि तादृशम् एव कुतो न स्यात् ?" इति हसन् अवदत् अपरः । एवं तयोः सम्भाषणं समाप्तम् ।"

"ये देवस्य अस्तित्वं न अङ्गीकुर्वन्ति ते कथं वा जीवन्ति ? जीवने कोऽपि विश्वासः स्यादेव खलु ?" इति उक्तवती जयश्रीः ।

"देवस्य अस्तित्वं ये अङ्गीकुर्वन्ति ते वस्तुतः अपि देवे भक्तिमन्तः इति चिन्तयति वा भवती ? दैवे भक्तिः अपि काचित् अन्धश्रद्धा केषाञ्चित् । यथा नास्तिकानाम् अज्ञानं तथैव एतेषाम् अपि किञ्चन अज्ञानम् एव । अतः एतादृशाः 'दैवविश्वासयुक्ताः' नास्तिकेभ्यः बुद्धिमत्तया चिन्तनाशक्त्या वा श्रेष्ठतराः इति वक्तुं सर्वथा न शक्नुमः" इति उक्तवान् देवनाथवर्यः । जयश्रीः, सन्दीपः, चमेली च तस्य वचनम् आसक्त्या शृण्वन्तः आसन् ।

"किन्तु भारतस्य इतिहासे दैवभक्तिः सर्वासु कथासु प्राधान्येन दृश्यते खलु ?" इति पृष्टवती जयश्रीः ।

"जीवनस्य सत्यस्य च अर्थस्य अन्वेषणं तु अस्माकं परम्परा । किन्तु कुत्रापि अन्यमतस्य निन्दा कृता न दृश्यते । वस्तुतः तु नास्तिकवादस्य जन्मभूमिः विकासवेदिका च भारतम् एव । नास्तिकवादस्य प्रवर्तकः चार्वाकः इति श्रूयते । तस्य अनुयायिनः अपि चार्वाकपदेन एव निर्दिष्टाः अनन्तरकाले । तदनन्तरकाले अनेके नास्तिकाः भौतिकवादिनः जाताः । तेषु बृहस्पतिः अपि अन्यतमः ।"

"बृहस्पतिः नाम कः ? यः देवानां गुरुः आसीत् सः एव किम् अत्र अभिप्रेतः ?" इति कुतूहलेन पृष्टवती चमेली ।

"न सः । अयं तु अन्यः एव । अयं मानवकुलजातः पण्डितः । तदनन्तरकाले अजित-सञ्जयनामकौ भौतिकवादिनौ तदेव तत्त्वं प्रतिपादितवन्तौ । एतदुत्तरकाले गोशालस्य नाम प्राधान्येन श्रूयते । सः 'आजीविका'परम्परायाः अनुयायी आसीत् । नास्तिकशिरोमणिः सः । किन्तु तस्य कथा दुरन्तोपेता ।"

"किमर्थं तस्य जीवनं दुरन्तं जातम् ?"

इति पृष्टवती जयश्रीः ।

ततः देवनाथवर्यः गोशालस्य कथाम् आरब्धवान् -

गोशालः महावीरजिनस्य समकालीनः । महावीरश्च जैनमतस्य प्रवर्धकः इति तु वयं जानीमः एव खलु ? महावीर-गोशालौ सुहृदौ अपि । किन्तु महावीरस्य परमवैरी अपि आसीत् गोशालः । कदाचित् तौ अरण्यमार्गेण गच्छन्तौ आस्ताम् । तदा महावीरः कैश्चित् मुकुलैः युक्तां काञ्चित् सुन्दरलताम् अपश्यत् ।

''अहो दैवसृष्टिः ! अद्य यत् मुकुलत्वेन दृश्यते तदेव द्वित्रेषु दिनेषु सुन्दरपुष्पत्वेन विकसितं भविष्यति । दैवलीला विचित्रा'' इति अवदत् महावीरः ।

''तत् पुष्पत्वेन विकसिष्यति इत्यत्र किं पूर्णविश्वासः भवतः ?'' इति उद्धतस्वरेण पृष्टवान् गोशालः ।

महावीरः मित्रस्य वचने स्थितम् औद्धत्यं दृष्ट्वा सकृत् आश्चर्यचकितः । स तु तत् वचनं सहजतया उक्तवान् आसीत् । मित्रस्य स्पर्धाह्वानवचनं श्रुत्वा सः क्षणकालं दिग्भ्रान्तः । सः स्वस्य नेत्रे निमील्य किमपि ध्यात्वा अवदत् - ''आम् ! मुकुलानि पुष्परूपेण विकसिष्यन्ति एव इत्यत्र नास्त्येव सन्देहः'' इति ।

गोशालः उपहासमिश्रितं हासं प्रदर्शितवान् । प्रत्युत्तरं किमपि न दत्तवान् ।

रात्रियापनार्थं तौ यत्र वासं कृतवन्तौ तच्च कुटीरं ततः सुदूरे न आसीत् । मध्यरात्रे यदा महावीरः निद्रामग्नः आसीत्, तदा गोशालः विना शब्दम् उत्थाय ततः लतासमीपं गतवान् । तां लताम् उन्मूल्य पार्श्वस्थे गर्ते क्षिप्तवान् । ततः कुटीरम् आगत्य यथापूर्वं मौनेन सुप्तवान् च ।

दिनद्वयस्य अनन्तरं तौ तेनैव मार्गेण गतवन्तौ । महावीरः लताविषये प्रवृत्तं वार्तालापं सर्वथा विस्मृतवान् आसीत् । किन्तु गोशालः लतास्थलं यदा प्राप्तं तदा विकृतहासं प्रदर्शयन्



अवदत् - ''भवतः मुकुलानि पुष्पतां न गतानि एव'' इति ।

''किं भवान् तथा चिन्तयति ?'' इति पृष्टवान् महावीरः ।

''न मम चिन्तनम् एतत् । वस्तुस्थितिः तादृशी'' इति हसन् एव उक्तवान् गोशालः ।

ततः तौ लतासमीपं गतवन्तौ । यत्र गोशालेन सा क्षिप्ता आसीत् तत्र अनन्तरदिने पतितायाः वृष्टेः कारणतः सा लता भूमौ मूलानि प्रसार्य सुन्दराणि पुष्पाणि विकासितवती आसीत् ।

महावीरः तानि पुष्पाणि दृष्ट्वा मन्दहासं प्रकटितवान् । किन्तु किमपि न उक्तवान् । किन्तु तावता गोशालस्य मुखं विच्छायं जातम् आसीत् । सः स्वस्य क्रोधं गोपयितुम् अशक्नुवन् असन्तोषेण - ''यदि सर्वम् अपि तेनैव निर्णीतं भवेत् तर्हि मानवप्रयत्नस्य का वा आवश्यकता ? जीवनस्य कोऽपि अर्थः एव न स्यात्'' इति वदन् महवीरं च निन्दन् ततः निर्गतवान् ।

दिनेषु गतेषु महावीरविषये तस्य असन्तोषः नितरां प्रवृद्धः । महावीरः यद्यत् वदति स्म तत्सर्वं कठोरतया खण्डयति स्म सः । एकदा सः महावीरं मारयितुम् आभिचारिकशक्तेः उपयोगं कृतवान् अपि । महावीरः स्वस्य सात्त्विकशक्त्या रक्ष्यमाणः आसीत् । अतः आसुरी शक्तिः महावीरं किमपि कर्तुम् अशक्ता सती प्रत्यागत्य प्रयोक्तारं गोशालम् एव अपीडयत् । गोशालः व्याधिग्रस्तः जातः । अल्पे एव काले उन्मत्ततां प्राप्य सः मरणम् अपि प्राप्तवान् ।

''वैरं कथं स्वस्यैव घातकं भवति इत्यस्य प्रत्यक्षम् उदाहरणम् एतत्'' इति वदन् देवनाथवर्यः स्वस्य कथनं स्थगयित्वा ततः उत्थितवान् ।

*- विश्वावसुः*





# देवीभागवतम्

सूतेन उक्तम् – ''ब्रह्मणः प्रार्थनानुसारं यदा योगनिद्रा गतवती तदा विष्णुः निद्रातः उत्थितवान्'' इति ।

तदा मुनयः पृष्टवन्तः – ''ब्रह्म-विष्णु-महेश्वराः एव सृष्टेः स्थितिकारकाः इति अस्माभिः श्रुतम् । त्रिषु विष्णुः एव सर्वोत्तमः इति वयं जानीमः । तादृशः विष्णुः एव यदा योगनिद्रायां मग्नः भवति, तदा तस्य शक्तिः कुत्र गच्छति ? विष्णुतः अपि अधिका शक्तिः आदिशक्त्या कथं प्राप्ता ? अत्र सत्यं किम् इति वयम् अवगन्तुं न शक्नुमः'' इति ।

तदा सूतः अवदत् – ''मुनिवर्याः ! नारदादयः महामुनयः अपि आदिशक्त्याः अपारं प्रभावम् अवगन्तुम् अशक्ताः विष्णुम् एव सर्वशक्तिमन्तं भावितवन्तः । किन्तु तत् तेषां भ्रममात्रम् आसीत् । केचन शिवम्, अन्ये केचन सूर्यम्, पुनः केचन अग्निम्, इतरे केचन चन्द्रं च भगवत्स्वरूपं भावितवन्तः । किन्तु आदिशक्तिः एव वास्तविकी शक्तिः । एषा एव शक्तिः विष्णौ, शिवे, सूर्ये, वायौ, अग्नौ च दृश्यते'' इति ।

तादृश्या शक्त्या एव जागरितः विष्णुः ब्रह्माणं दृष्ट्वा –''पुत्र, तपः परित्यज्य अत्र किमर्थम् आगतवान् भवान् ? भवतः चिन्तायाः कारणं किम् ?'' इति अपृच्छत् ।

तदा ब्रह्मा –''कथम् अहं तपः आचरामि ? भवतः कर्णाभ्यां मधुकैटभ-नामकयोः राक्षसयोः जन्म अभवत् । तौ मां हन्तुम् उद्युक्तौ स्तः । युद्धार्थं माम् आह्वयन्तौ स्तः तौ'' इति अवदत् ।

तदा विष्णुः – ''एतावतः एव किं भीतः भवान् ? मया तादृशाः बहवः राक्षसाः मारिताः खलु ?'' इति वदन् आसीत् । तावता तौ द्वौ राक्षसौ तत्र आगतवन्तौ ।

## २. मधुकैटभयोः वधः, शुकस्य जननं च



तौ ब्रह्माणम् अपृच्छताम् – ''अत्र निलीय स्थितवान् वा भवान् ? किम् एषः विष्णुः भवन्तं रक्षति ? भवान् एकः एव मरणं सम्मुखीकरोतु । आत्मना सह एतम् अपि किमर्थं नयति ?'' इति ।

'भवान् मम पृष्ठतः तिष्ठतु' इति उक्त्वा विष्णुः राक्षसौ उद्दिश्य – ''मदमत्तौ भूत्वा असम्बद्धं प्रलपतः किम् ? स्थीयताम् । यथायोग्यं दण्डयिष्यामि'' इति उक्त्वा युद्धार्थं तौ सज्जीकारितवान् ।

विष्णोः मधोः च भीकरं युद्धम् आरब्धम् । आकाशे स्थिता देवी एतत् दृश्यं पश्यन्ती आसीत् । यदा मधुः श्रान्तः भवति स्म तदा कैटभः विष्णुना सह युद्धं करोति स्म । द्वौ अपि राक्षसौ स्वस्य सर्वां शक्तिं पणीकृत्य युद्धं कुर्वन्तौ आस्ताम् । अतः विष्णुः बलहीनताम् अनुभवन् आसीत् । किं करणीयम् इति अवगन्तुं न शक्तवान् सः ।

चिन्ताक्रान्तं विष्णुं दृष्ट्वा राक्षसौ उक्तवन्तौ – ''युद्धार्थं सामर्थ्यं नास्ति चेत् भवान् आवयोः दासः भवतु । यदि भवान् एवं न करिष्यति, तर्हि प्रथमं भवन्तं हत्वा पश्चात् ब्रह्माणं मारयिष्यावः'' इति ।

तदा विष्णुः मन्दस्वरेण – ''श्रान्तस्य परान्मुखस्य, भीतस्य, रणरङ्गे पतितवतः मनुष्यस्य च मारणं वीरधर्मः न । भवन्तौ द्वौ । अहम् एकाकी । किञ्चित्कालं यावत् विश्रम्य पुनः युद्धं करिष्यामि । किं भवन्तौ युद्धधर्मं न जानीतः ?'' इति पृष्टवान् ।

तदा द्वौ अपि – ''तथैव भवतु । भवान् विश्रान्तिम् अनुभवतु । आवाम् अपि विश्रान्तिम् अनुभवावः'' इति उक्तवन्तौ ।

तदा विष्णुः स्वदिव्यदृष्ट्या ज्ञातवान् यत् 'एतौ वरेण अनुगृहीतौ स्तः' इति । ततः सः स्वगतम् एव अवदत् – 'मया अनावश्यक-रूपेण एताभ्यां सह युद्धं कृतम् । वरस्य कारणतः एतयोः मृत्युः न भविष्यति । एतौ मृत्योः मुक्तौ स्तः । एवं स्थिते एतयोः मारणं कथम् ?' इति । तस्य मनः उद्विग्नम् अभवत् । अन्ते सः जगदम्बां स्मृतवान् ।

''मातः ! भवत्याः साहाय्यं विना एतयोः मारणं न शक्यम् । प्रायशः एतौ एव मां मारयतः इति भाति । एतयोः कृते भवत्या एव वरं दत्तम् । अतः एतौ कथं मारणीयौ इति भवती एव वदतु'' इति उक्तवान् विष्णुः ।

विष्णोः दैन्यावस्थां दृष्ट्वा देवी मन्दहास-पूर्वकम् अवदत् – ''अहं तौ मायया

आवृणोमि । तदा तौ जयतु 'भवान्'' इति ।

राक्षसौ विष्णुम् उद्दिश्य उक्तवन्तौ - ''पराजयस्य विषये भीतः किम् ? जयपराजयौ वीराणां जीवने स्वाभाविकौ । भवता बहवः राक्षसाः मारिताः खलु ? विजयः चिरस्थायी न खलु ?'' इति सोपहासम् उक्तवन्तौ ।

क्रुद्धः विष्णुः मुष्ट्या प्रहारं कृतवान् । रक्तं वमन्तौ तौ अपि विष्णोः उरसि मुष्टिप्रहारं कृतवन्तौ । एवं तेषु भीषणं मुष्टियुद्धम् आरब्धम् । बहुधा श्रान्तः विष्णुः आकाशे स्थितां देवीं दृष्टवान् ।

तदा देवी तयोः राक्षसयोः उपरि कामबाणसदृशीं दृष्टिं प्रसारितवती । अनुक्षणं राक्षसौ युद्धविषयं विस्मृतवन्तौ । तौ मोहपाशेन बद्धौ अभवताम् । तदा विष्णुः तौ उक्तवान् - ''अहं बहून् राक्षसान् सम्मुखीकृतवान् अस्मि । किन्तु युद्धविद्यायां भवादृशौ निपुणौ मया न दृष्टौ । भवतोः युद्धनैपुण्यं दृष्ट्वा अहम् अत्यन्तं प्रसन्नः अस्मि । भवतोः कापि इच्छा अस्ति चेत् वदताम् । अहं ताम् इच्छां पूरयिष्यामि'' इति ।

देव्याः प्रभावस्य कारणतः मायामोहग्रस्तौ राक्षसौ विष्णोः वचनैः क्रुद्धौ । ''आवां न याचकौ । भवान् एव याचतु । आवां दद्वः'' इति अहङ्कारेण उक्तवन्तौ तौ ।

तदा विष्णुः - ''किं तर्हि मया अपेक्षितं यच्छतः ? मम युद्धविद्यया भवन्तौ प्रसन्नौ चेत् मम द्वारा मरणं प्राप्नुताम्'' इति अवदत् ।

राक्षसौ विष्णोः अभियाचनां श्रुत्वा स्तब्धौ जातौ । क्षणं यावत् विचिन्त्य उक्तवन्तौ तौ - ''भवान् वचनपरिपालकः खलु ? वरं ददामि




इति भवता अपि वचनं दत्तम् अस्ति । आवयोः मारणं तादृशविशालप्रदेशे करणीयं यत्र किञ्चित् अपि जलं न भवति । एतन्नियमानुसारं भवतः हस्तात् मरणं सम्मुखीकर्तुं सिद्धौ स्वः'' इति ।

तत् श्रुत्वा विष्णुः हसन् स्वस्य ऊरुं वर्धयन् ''राक्षसौ ! आगच्छताम्'' इति अवदत् । राक्षसौ स्वशरीरं विष्णोः ऊरोः अपेक्षया विस्तारितवन्तौ । यदा राक्षसौ शरीरं वर्धितवन्तौ तदा विष्णुः अपि ऊरुं वर्धयति स्म । सर्वेषु पश्यत्सु राक्षसयोः शरीरात् विष्णोः ऊरुः विशालः अभवत् । तदा विष्णुः स्वस्य चक्रस्य स्मरणं कृतवान् । तेन चक्रेण तयोः राक्षसयोः वधं कृतवान् । तयोः मेदः समुद्रे पतितम् । तत्र एकं शिखरम् उत्पन्नम् । तदारभ्य भूम्याः नाम 'मेदिनी' इति अभवत् ।



## व्यासस्य तपस्या

सूतेन उक्तान् सर्वान् अंशान् श्रुत्वा मुनयः अवदन् - ''भवत्तः अद्य वयं बहून् विषयान् श्रुतवन्तः, ज्ञातवन्तः च । किन्तु तस्य व्यासस्य विषयः भवता न उक्तः, यश्च पुत्रप्राप्त्यर्थं तपस्यायै प्रस्थितवान् आसीत्'' इति ।

सूतः व्यासमहर्षेः कथां विवृतवान् -

नारदेन कथितस्य मन्त्रस्य जपं कुर्वन् व्यासमहर्षिः स्वर्णगिरौ कर्णिकारवने तपस्याम् आरब्धवान् । यदा सः पूर्णां शक्तिं संयोज्य तपः आरब्धवान् तदा भूम्याकाशौ कम्पितौ जातौ । सर्वे देवाः भीत्या शिवस्य समीपं गत्वा - ''व्यासः घोरे तपसि मग्नः अस्ति । अस्माकम् उपरि महती विपत् आपतिता अस्ति इति भाति । अस्मान् रक्षतु'' इति उक्तवन्तः ।

तदा शिवः देवताः सान्त्वयन् - ''तपस्विनः अहितं कदापि न करणीयम् । ते कदापि अन्येषाम् अहितं न चिन्तयन्ति । व्यासः पुत्रप्राप्त्यर्थं मम स्मरणं कुर्वन् अस्ति । अतः सः तपसि निरतः अस्ति'' इति उक्तवान् । अनन्तरं शिवः व्यासस्य पुरतः प्रत्यक्षः भूत्वा तस्य इच्छां पूर्णां कृतवान् । ततः व्यासः आश्रमं प्रत्यागतवान् ।

सः अग्निं प्रज्वाल्य मनसि अवदत् - ''कापि तादृशी स्त्री अस्ति किं, या च एतादृशम् अग्निसमानं पुत्रं प्रदातुं शक्नोति ? स्त्रियः सर्वाः प्रतिबन्धिकाः एव'' इति ।

यदा एवं चिन्तयन् सः आकाशं दृष्टवान् तदा तेन घृताची दृष्टा । पार्श्वे एव कामदेवः अपि दृष्टः । व्यासः कामदेवस्य प्रभावेण ग्रस्तः अभवत् । तथापि सः एवं चिन्तितवान् - 'एषा मां वञ्चयितुम् एव अत्र आगता अस्ति

इति भाति । एतया सह सुखेन जीवनयापनेन हानिः तु न स्यात् खलु ! एतां वृणोमि चेत् मुनयः मां न उपहसेयुः खलु ! ऊर्वशी पुरूरवसम् इव एषा मां न पीडयेत् खलु ! ऊर्वशी तु पुरूरवसं विरहवेदनया परितापितवती आसीत्' इति ।

व्यासः शापं दद्यात् इति घृताची अपि बिभेति स्म । सा शुकरूपं धृत्वा उड्डीय गतवती । अतः अग्निनिमित्तं मथितात् अरणितः शुकस्य जन्म अभवत् । व्यासः शुकं पश्यन् - ''किमिदं विचित्रम् ? एषः शिवस्य महिमा एव स्यात्'' इति उक्तवान् । सः स्वपुत्रं गङ्गानदीं प्रति नीतवान् । स्नानं कारितवान् । आकाशे देवदुन्दुभीनां घोषणम् अभवत् । भूमेः उपरि पुष्पवृष्टिः जाता ।

शुकरूपं धृतवत्याः स्त्रियः कारणतः पुत्रः जातः इति कारणतः व्यासः पुत्रस्य नामकरणं 'शुकः' इत्येव कृतवान् । बालकः क्रमशः वर्धमानः आसीत् । शुकनिमित्तम् आकाशतः मृगचर्म कमण्डलुः च पतितम् । व्यासः पुत्रस्य यज्ञोपवीतसंस्कारं कृतवान् । बृहस्पतेः सकाशात् वेदाभ्यासं कारितवान् ।

विद्याभ्यासस्य समाप्तेः अनन्तरं गुरुदक्षिणां दत्त्वा शुकः पितुः समीपम् आगतवान् । अध्ययनं समाप्य आगतवन्तं पुत्रं दृष्ट्वा व्यासः अत्यन्तं हृष्टः । सः पुत्रस्य विवाहं कारयितुम् इष्टवान् । किन्तु शुकः विवाहप्रस्तावं निराकृतवान् । 'वैराग्यतत्त्वम् उपदिशतु' इति पितरं प्रार्थितवान् ।

तदा व्यासः - ''मनसः नियन्त्रणं कृत्वा तस्य निर्मलतारक्षणम् एव मुक्तिमार्गः । न्यायपूर्वकं धनार्जनम्, असत्यस्य अकथनम्, अतिथीनाम् आदरणं, योग्येभ्यः दानं च गृहस्थस्य कर्तव्यानि । एतानि यः निर्वहति सः मुक्तिं प्राप्स्यति । अतः एव वसिष्ठादयः महर्षयः गृहस्थाश्रमं स्वीकृतवन्तः । भवान् अपि सुयोग्यां कन्यां परिणयतु'' इति उक्तवान् ।

तावतः कथनस्य अनन्तरमपि शुकस्य मनः वैराग्ये एव लग्नम् आसीत् । एतत् ज्ञात्वा व्यासः - ''पुत्र ! मया बहुपूर्वं देवीभागवतस्य रचना कृता । तत् मुक्तिं प्रदातुं समर्थम् अस्ति । तत् पठित्वा ज्ञानी भव'' इति उक्त्वा देवीभागवतस्य कथनम् आरब्धवान् ।





# कृष्णभूपतिः

*(गतमासतः अनुवृत्तम् ...)*

"प्रभो ! भवता ऊहितं सम्यक् अस्ति । अहं क्षत्रियकन्या एव । तावदेव न । अहं भवतः मातुलस्य कुशद्वीपस्य महाराजस्य चम्पकवर्मणः श्वशुरगृहपरिवारस्य सदस्या अस्मि । भवतः मातुलस्य विवाहः यदा सम्पन्नः तदा मम पितुः गोपालसेनस्य, भवतः मातुलस्य च गाढा मैत्री अभवत् । मम पित्रा तत्रैव स्थातव्यम् इति भवतः मातुलः अनुरोधं कृतवान् । तदारभ्य अस्माकं कुटुम्बसदस्याः कुशद्वीपे एव वासम् आरब्धवन्तः । राजकुटुम्बीयानां सेवार्थम् अस्माकं कुटुम्बसदस्याः जीवनं समर्पितवन्तः ।

ममापि जन्म तत्र एव अभवत् । भवतः मातुलस्य पुत्र्याः ज्योत्स्नायाः अहं मासेन कनीयसी । यथा मम पिता, भवतः मातुलः च सुहृदौ आस्तां, तथैव अहं ज्योत्स्ना च सख्यौ । आ बाल्यात् आवयोः सहैव वासः आसीत् ।

भवतः पितुः मरणवार्तां श्रुत्वा महाराजः चम्पकवर्मा भवतः राज्यम् आगतवान् । वयं तस्य प्रतीक्षां कुर्वन्तः आस्म । किन्तु सः मूल्यवन्तं राजप्रतिनिधिरूपेण नियुक्तवान् । मूल्यवतः नियुक्त्या अस्माकं बहु निराशा अभवत् । तदा मम पिता महाराजस्य आप्तसूचनाकारः आसीत् ।

कतिचन दिनानि मूल्यवान् विश्वासपात्रम् एव आसीत् । क्रमशः तस्य स्वभावे परिवर्तनम् आगतम् । मम पिता मूल्यवति जायमानं परिवर्तनम् अवलोकमानः आसीत् । मम पिता

तां वार्तां प्रसारयितुं न इच्छति स्म । सः दुष्टतायाः प्रमाणानि एकत्रीकर्तुम् इष्टवान् । तदनन्तरमेव भवतः पिता सूचनीयः इति मम पितुः अभिमतम् आसीत् । अस्मिन् विषये मम पिता अत्यन्तं जागरूकः आसीत् । मम पिता सर्वाणि प्रमाणानि सङ्गृह्य सप्रमाणं भवतः पित्रे पत्रमेकं लिखितवान् । तत् पत्रं मम पिता कपोतद्वारा मलयद्वीपं प्रेषयितुम् इच्छति स्म । कपोतद्वारा वार्ताप्रापणदायित्वं कस्यचित् अधिकारिणः आसीत् । 'सः अधिकारी मूल्यवतः आप्तः' इति मम पिता न जानाति स्म । तत् पत्रं चन्दनवर्मराजेन न प्राप्तमेव । मूल्यवान् तत् पत्रं प्राप्तवान् । कुपितः मूल्यवान् मम पितुः हननं कारितवान् । शवं भूमौ कुत्रचित् निखातवान् । केनापि एषः विषयः न ज्ञातः एव ।

अनन्तरं मूल्यवान् 'कार्यान्तरवशात् भवतां पिता मलयद्वीपं प्रति प्रेषितः अस्ति' इति वार्तां प्रेषितवान् । 'तस्य आगमने विलम्बः भवेत्' इत्यपि मूल्यवता सूचितम् आसीत् । आरम्भे वयं तेन उक्तं सत्यम् इत्येव भावितवन्तः । अनन्तरं ममापि मनसि सन्देहः उत्पन्नः । मूल्यवान् कुतन्त्रं रचितवान् अस्ति इति भावना भवति स्म । किन्तु तदा वयम् अनन्यगतिकाः आस्म ।

किन्तु गच्छता कालेन मूल्यवतः दुष्टतायाः काऽपि सीमा एव न आसीत् । एकैकशः तस्य पापकृत्यानि दृष्टिगोचराणि अभवन् । सर्वत्र तस्य दुष्कृत्यानां विषये चर्चा आरब्धा । जनाः – 'मूल्यवान् राजा भवितुम् इच्छति । तदर्थं सः यत्किमपि कर्तुं सिद्धः अस्ति' इति



वदन्ति स्म । भवतः मातुलम् अपेक्षमाणाः केचन अधिकारिणः मूल्यवतः विरोधं कृतवन्तः । तस्य व्यवहारविषये आक्षेपं कृतवन्तः । परिणामरूपेण तेषाम् अपि सा एव गतिः अभवत्, या च मम पित्रा अनुभूता आसीत् । मूल्यवान् स्वयं पापं कियत्कालं गोपयितुं शक्नुयात् ? क्रमशः वयम् अपि सत्यं किम् इति ज्ञातवन्तः । मम पितुः मरणवार्तां केचन विश्वासपात्राधिकारिणः यदा दृढीकृतवन्तः तदा मम माता अस्वस्था अभवत् । किञ्चित्कालानन्तरं सा दिवङ्गता ।

तदा मम परिवारे अहम् एका एव अवशिष्टा अभवम् । मदीयः कोऽपि नास्ति । मम शरीरस्य प्रतिकणम् अपि प्रतीकारस्य ज्वालया ज्वलत् अस्ति । अहं मम विवशतां जानामि स्म । अहम् एकाकिनी किमपि कर्तुं



न शक्नोमि इति जानामि स्म । अतः अहं गृहतः पलायनं कृत्वा एतत् अरण्यं प्रविष्टवती । अस्मिन् अरण्ये भील्‌जातीयाः जनाः निवसन्ति । ते युद्धविद्यासु प्रवीणाः भवन्ति । शास्त्रीययुद्धविद्या तु मया ज्ञाता एव आसीत् । बाल्याद् आरभ्य एव अहं वेगेन खड्गभ्रामणं जानामि स्म । महाराजः चन्दनवर्मा अपि अत्यन्तं सन्तुष्टः आसीत् । अतः सर्वदा मां प्रशंसति स्म । अहं पुरुषवेषं धृत्वा भील्‌जनजातेः युद्धतन्त्राणि ज्ञातवती । ततः कुशद्वीपस्य राजधानीं प्रति गत्वा महाराजस्य चन्दनवर्मणः आगमनस्य प्रतीक्षां कुर्वती आसम् ।

मम संशयः आसीत् यत् यदा चन्दनवर्ममहाराजः प्रत्यागमिष्यति तदा मूल्यवान् राज्यं न प्रत्यर्पयेत्, अनन्तरं द्वयोः मध्ये युद्धं भवेत् इति । महाराजस्य पक्षे स्थित्वा युद्धं करणीयम् इति पूर्वमेव निश्चितम् आसीत् मया । कथञ्चित् मूल्यवतः प्राणहरणं करणीयम् इति मम सङ्कल्पः आसीत् । मम चिन्तनं सत्यमेव परिणतम् इत्यतः मम सख्याः गृहे रहस्यरूपेण वासम् आरब्धवती ।

यथा मया चिन्तितं तथैव बहूनां वर्षाणाम् अनन्तरं चन्दनवर्मा राजधानीं प्रत्यागतवान् । किन्तु युद्धस्य प्रसक्तिः एव न आसीत् । यतः मूल्यवतः कृतघ्नतया, विश्वासघातेन च चन्दनवर्मा विचलितः जातः । महान्तम् आघातम् अनुभूय सः हृदयाघातेन स्वर्गस्थः अभवत् । बिन्दुमात्रमपि रक्तम् अपातयित्वा सिंहासनं मूल्यवान् अधीनीकृतवान् । 'कः आत्मीयः ? कः द्रोही ?' इत्येव अवगन्तुं न शक्ता राज्ञी । सा पुत्रीं ज्योत्स्नां स्वीकृत्य ततः पलायनं कृत्वा भवतां देशं प्रति आगतवती ।

'महाराज्ञी मलयद्वीपं गतवती स्यात्' इति मूल्यवान् भावितवान् । मम पुरतः एव प्रवृत्ताभिः एताभिः घटनाभिः मम महती निराशता जाता ।

एतादृशपरिस्थितौ मया किं करणीयम् इत्येव न ज्ञातम् । तेषु एव दिनेषु मया भवतः शौर्यपराक्रमयोः गाथाः श्रुताः । 'भवान् एव मम एकमात्रम् आधारः' इति अभासत । भवतः द्वारा एव मम लक्ष्यपूर्तिं कर्तुं शक्नुयाम् इति मम विश्वासः आसीत् । भवान् मौनेन न तिष्ठेत् । भवतः मातुलस्य हननकर्तारं योग्येन दण्डेन, तन्नाम मरणदण्डेन, दण्डयेत् इति मम मतम् आसीत् । एतादृशे अवसरे कोऽपि क्षत्रिययोद्धा तूष्णीं स्थातुं न शक्नोति खलु । एतया आशया एव अहम् अरण्यम् आगत-

वती । यतः कुशद्वीपं प्रति गमनमार्गः एषः एव खलु । सद्यःकाले एव भवान् तत्र आगमिष्यति, तदा भवतः सैन्यं प्रविशामि इति मम विचारः आसीत् । प्रतीकारस्य ज्वालां शमयितुम् इच्छुका अहं भगवन्तं प्रार्थयन्ती भवतः आगमनस्य प्रतीक्षायाम् आसम् ।

कल्वारद्वीपं जित्वा अपारसेनया सह भवान् कुशद्वीपं प्रति प्रस्थितवान् अस्ति इत्येतां वार्ता श्रुत्वा अहं हर्षनिर्भरा अभवम् । भगवत्कृपया यथा मया चिन्तितम् आसीत् तथैव प्रवृत्तम् । अनन्तरं यत् प्रवृत्तं तत् भवता ज्ञातमेव अस्ति । एकाकिन्या मया यत् कर्तुं शक्यं न आसीत् तत् भवतः सहयोगेन साध्यम् अभवत् । आरम्भतः अपि भवान् मयि आदरं दर्शितवान् । मम योगक्षेमं दृष्टवान् । अतः भवते हार्दाः धन्यवादाः'' इति उक्त्वा कलाकौमुदी स्वकथां समापितवती ।

कृष्णभूपतिः तस्याः कथां अवधानपूर्वकं शृण्वन् आसीत् । अनन्तरं सः - ''ज्ञानेन अज्ञानेन वा भवत्याः आशयस्य पूर्त्यर्थं मया भवत्याः साहाय्यं कृतम् । मया एतावत् महत् साहाय्यं कृतं, तदर्थं धन्यवादसमर्पणमात्रं पर्याप्तं किम् ?'' इति अपृच्छत् ।

राज्ञः वचनेभ्यः भीता कौमुदी अवदत् - ''धन्यवादसमर्पणमात्रेण ऋणमुक्तिः न भवति इति अहं जानामि । भवता यत् साहाय्यं कृतं, ये आदरसम्मानादयः प्रदर्शिताः तदर्थम् आजन्म कृतज्ञा तिष्ठामि । यत् कार्यं भवान् सूचयति तत् कर्तुम् अहं सिद्धा अस्मि'' इति ।

तदा कृष्णभूपतिः मन्दहासपूर्वकम् उक्तवान् – ''अहं कृष्णभूपतिः अस्मि । कलासु



युद्धविद्यायां च अतुलनीयायै, प्रज्ञाशालिन्यै, सत्यभामासदृश्यै भवत्यै कीदृशीम् आज्ञां दातुं शक्नोमि ? भवती एव सूचयतु'' इति ।

कृष्णभूपतेः वचने विद्यमानं गूढार्थं ज्ञातवती कौमुदी मन्दहासपूर्वकं मृदुमधुरस्वरेण - ''यथा भवान् इच्छति तथा आज्ञां कर्तुम् अर्हति । भवतः आज्ञां तु शिरसा वहामि अहम्'' इति उक्तवती ।

तदा कृष्णभूपतिः - ''कौमुदि, भवती मह्यम् अरोचत । अहं भवतीं मम राज्ञीं कर्तुम् इच्छामि । किन्तु एका लघुसमस्या अस्ति । मम मातुः अपेक्षा अस्ति यत् मया मम मातुलस्य पुत्री ज्योत्स्ना एव वोढव्या इति । यतः मातुलः मम व्यक्तित्वस्य निर्माणे महत्तरं पात्रम् अवहत् इति भवती जानात्येव । एतत् सत्यं मनसि निधाय यदि चिन्तयामः तर्हि भासते



यत् मम मातुः कथने अनौचित्यं किमपि नास्ति इति । अहं मम मात्रे वचनम् अपि दत्तवान् अस्मि यत् भवत्याः अपेक्षां पूरयिष्यामि इति । अतः अहम् इदानीम् एव भवतीं परिणेष्यामि चेदपि भवती महाराज्ञी तु न भविष्यति । मम इष्टदेवी भूत्वा स्थास्यति । एषः प्रस्तावः यदि भवत्या अङ्गीक्रियते तर्हि आवाम् अस्मिन् एव क्षणे दम्पती भवाव'' इति उक्तवान् ।

कलाकौमुदी राज्ञः वचनैः निरुत्साहिता न अभवत् । सा प्रेमपूर्णस्वरेण अवदत् - ''नाहं महाराज्ञी भवितुम् इच्छामि, न वा सिंहासनस्य अर्धभागम् अपेक्षे प्रभो ! भवतः हृदये अहं शाश्वतं स्थानं प्राप्नोमि चेत् पर्याप्तम् । तदेव मम सौभाग्यम् इति भावयामि'' इति ।

अत्यन्तम् आनन्दितः कृष्णभूपतिः तस्मिन् एव क्षणे गान्धर्वविधिना कौमुदीं परिणीतवान् । किन्तु विवाहवार्तां सः कुत्रापि न प्रकटितवान् ।

मलयद्वीपं प्रति प्रत्यागमनसमये सः कलाकौमुदीम् अपि नीतवान् । तस्याः परिचयं कारयन् सः - 'एषा गोपालसेनस्य पुत्री' इति एतावन्मात्रम् एव मातरम् उक्तवान् । तदा तत्र उपस्थितवत्यौ ज्योत्स्ना तस्याः माता च कौमुद्याः कुशलं विचारितवत्यौ ।

केषाञ्चन दिनानाम् अनन्तरं भूपतिः कौमुद्या सह विवाहकरणस्य इच्छां मातुः पुरतः उपस्थापितवान् ।

यस्मिन् दिने भूपतिः कौमुद्याः परिचयं कारितवान् तस्मिन् एव दिने सुनन्दादेव्याः मनसि सन्देहः उत्पन्नः आसीत् एव । सा क्षणं यावत् मौनम् आश्रितवती । अनन्तरं सा - ''पुत्र ! भवतः निर्णयेन अहं सन्तुष्टा अस्मि । किन्तु ज्योत्स्नायाः का गतिः ? युद्धतः प्रत्यागमनानन्तरं भवान् किं तया सह कुशद्वीपस्य विषये वार्तालापं कृतवान् ?'' इति पृष्टवती ।

तदा कृष्णभूपतिः - ''आम् अम्ब ! अहं सम्भाषणं कृतवान् । किन्तु अहं तस्याः मुखे आनन्दस्य छायाम् एव न दृष्टवान् । अहं तस्य कारणं ज्ञातुं प्रयत्नं कृतवान् । किन्तु ज्ञातुम् अशक्तः। अद्य अहम् एव भवतीं प्रष्टुम् इष्टवान् । तस्याः उदासीनतायाः कारणं किं स्यात् ?'' इति पृष्टवान् ।

सुनन्दादेवी किञ्चित्कालं पुत्रस्य मुखम् अवलोक्य अवदत् - ''कृष्ण ! ज्योत्स्नया सह विवाहस्य प्रस्तावं भवान् अपि न कृतवान् आसीत् । सा अपि न कृतवती आसीत् । एषः प्रस्तावः तु मम भ्रात्रा चन्दनवर्मणा कृतः

आसीत् । सर्वदृष्ट्या एषः प्रस्तावः समीचीनः इति मह्यम् अपि अभासत । अहम् एकं विषयं पृच्छामि । सत्यं वदतु । मातुः पुरतः भवान् असत्यं न वदति इति विश्वसिमि । कदापि भवतः मनसि ज्योत्स्नया सह विवाहस्य इच्छा किम् उत्पन्ना ?'' इति ।

मातुः प्रश्नेन आश्चर्यचकितः भूपतिः क्षणं यावत् मौनेन स्थित्वा अवदत् – ''अम्ब ! मम मनसि कदापि तादृशी इच्छा न उत्पन्ना । भवती मम पुरतः विवाहप्रस्तावम् उपस्थापित-वती आसीत् । मातुः आज्ञा इति भावयित्वा अहम् अङ्गीकारं सूचितवान् । मम एवं भाति यत् ज्योत्स्नायाः विषये भवती किमपि वक्तुम् इच्छति इति ।''

पुत्रस्य उत्तरं श्रुत्वा सुनन्दादेव्याः शिरसि विद्यमानः भारः अपगतः इव । सा – ''कृष्ण ! भवान् अत्यन्तं भाग्यशाली अस्ति । इष्टां कन्याम् आत्मना सह आनीतवान् भवान् । ज्योत्स्नायाः अपेक्षा अस्ति यत् केवलं कुशद्वीपस्य राज्ञी भविष्यामि इति । भवतः राज्ञी भवितुं न इच्छति सा'' इति उक्तवती ।

तत् श्रुत्वा कृष्णभूपतिः अपारं हर्षम् अनुभूतवान् । सः मातरम् उद्दिश्य – ''अम्ब ! यथा भवत्या कथितं तथा अहं भाग्यशाली एव । तथैव ज्योत्स्ना अपि भाग्यशालिनी । यस्मिन् दिने सा कुशद्वीपं प्रति गन्तुम् इच्छति तस्मिन् एव दिने तां तस्याः परिवारसहितं सकुशलं प्रेषणस्य व्यवस्थां करिष्यामि । तया सह किञ्चित् सैन्यमपि प्रेषयिष्यामि, येन सा शत्रुभ्यः भयं न अनुभवेत्'' इति उक्तवान् ।

सुनन्दादेवी दीर्घं निश्श्वसन्ती – ''एतादृशी गभीरा समस्या एवं सुलभतया परिहृता भवेत् इति मया न चिन्तितम् आसीत्'' इति उक्तवती ।

तदा कृष्णभूपतिः हसन् – ''अम्ब ! एतेन मम अपि एका महती समस्या परिहृता अभवत् । तदा मया कलाकौमुदी सूचिता आसीत् यत् – 'भवती राजमहिषी भवितुं न शक्नोति । केवलं पत्नीरूपेण स्थातुं शक्नोति' इति । किन्तु इदानीं सा न केवलं मम इष्टदेवी, अपि तु राजमहिषी अपि भवितुं शक्नोति । एतां शुभवार्तां तां श्रावयित्वा आगच्छामि'' इति उक्त्वा ततः वेगेन निर्गतवान् ।

''शुभं भवतु पुत्र !'' इति उक्त्वा सुनन्दा-देवी पुत्रस्य आशीर्वादं कृतवती ।



# अजेयः गरुडः


चन्दमामाप्रस्तुतिः
8
अजेयः गरुडः
चित्र - पाणिः
सेनापतिः नरेन्द्रदेवः गरुडस्य-ग्रहणे असफलः जातः । सः, तत्पुत्रः रवीन्द्रदेवः च एकं तन्त्रं रचितवन्तौ । किन्तु अन्ते रवीन्द्रदेवः एव ध्वजस्तम्भे बद्धः जातः सन् लज्जाम् अनुभूतवान् । गरुडः नौकायाम् अस्ति इति वार्तां प्राप्य सः आस्थानं प्रति आनीतः । रवीन्द्रदेवेन तस्य मुखावरणम् अपनीतम् । तदा तेन दृष्टं पितुः मुखम् एव ! आदित्येन आरब्धाः योजनाः सफलाः जाताः । सन्तुष्टः राजा नरेन्द्रदेवस्य विरोधे सत्यपि आदित्यं प्रधानमन्त्रिणं कृतवान् ।


प्रधानमन्त्री आदित्यः सर्वेषाम् आस्थानिकप्रमुखाणां सभाम् आयोजितवान् ।
चन्द्रपुर्यां शान्तिः स्थापिता अस्ति यत् ततः राजा सन्तुष्टः अस्ति । एषा शान्तिः सदा रक्षणीया अस्माभिः ।
गरुडस्य विषये वयं किञ्चित्कालं किमपि न जानीमः स्म एव ।


आदित्यः दलपतिः इव कार्यं करोति स्म । अतः सेनापतिः असूयया ज्वलति स्म ।
गरुडः पुनः आक्रमणं करिष्यति । सः अवकाशं प्रतीक्षमाणः अस्ति, तावदेव !
एवम् ! भवान् रक्षणादिव्यवस्था-विषये अवधानं ददातु !


अहं शान्तिपालन-व्यवस्थां परि-शीलयिष्यामि ।
यदि सः मया प्राप्यते तर्हि अहं तं विदारयिष्यामि ।

प्रधानमन्त्रिगृहम् । आदित्यः यदा पितुः आशीर्वादं प्राप्नुवन् आसीत् तदा कोऽपि शब्दः च तस्य अवधानभङ्गम् अकरोत् ।

अहो गृध्रः ! कोऽपि सन्देशः स्यात् एव ।

तत् रामसिंहेन प्रेषितम् आसीत् । 'रवीन्द्रदेवः शान्तिस्थापनोद्यमे दोषं दर्शयितुं प्रयतमानः अस्ति ।

एषा कां वार्ताम् आनीतवती स्यात् ?

पत्रं पठन् सः अन्तः आगच्छन्तीम् अरुणां दृष्टवान् ।

अभिवादये नूतनं प्रधानमन्त्रिणम् ।

अरुणा ! भवती एषु दिनेषु न दृष्टा एव ।

अहम् नूतनतया स्थापिते वसतिप्रदेशे वसामि । रामसिंहः मम योगक्षेमादिकं पश्यति । किन्तु ......

कुतन्त्रम्

रवीन्द्रदेवस्य जनाः तत्रापि हानिं जनयन्तः सन्ति । अस्माभिः श्रुतं यत् सः पित्रा सह सम्भूय कामपि अपायकरीं योजनां चिन्तितवान् अस्ति इति ।


एतस्मात् विविधा पीडाः उत्पन्नाः भवेयुः ।
सर्वं लोकपीडनार्थम्
पार्श्वराज्यतः ते सैनिकान् दुष्टान् च निमन्त्रयन्ति एतदर्थम् ।


...राज्ञः प्रधानमन्त्रिणः च हननं कृत्वा दोषित्वेन गरुडं निर्दिश्य शासनसूत्रभारं स्वयं स्वीकरणीयम् इति तयोः चिन्तनम् । बाह्यव्यवहारेण राजभक्तौ इव तौ । वस्तुतस्तु वञ्चकाः ....


मां पूर्वम् एव ज्ञापयन्त्या भवत्या उपकारः कृतः ।
स्वविषये अवधानं भवतु ।
अद्य पूर्णिमा । रात्रौ पूजा करणीया मया ।


भवतः पितुः वचनानि कर्णयोः गुञ्जन्ति । भवान् चन्द्रपुरीरक्षणार्थम् एव जातः । भगवान् गरुडः भवतः रक्षणं करिष्यति सदापि । एषाहं प्रस्थिता ।


मम पूजायाः आरम्भस्य अनन्तरम् एषा सप्तमी पूर्णिमा ।


हे भगवन् गरुढ ! भवतः आशीर्वादबलात् एव अहं पितुः स्थाने नियुक्तः जातः अस्मि । दुष्टेभ्यः देशस्य रक्षणार्थं भवता एव मार्गः दर्शनीयः ।


स्वार्थः न चिन्त्यते चेत् मम शक्तिः भवन्तं रक्षिष्यति । शौर्येण स्वमातृभूमेः रक्षणार्थं भवान् उद्युक्तः भवतु ।


पिञ्छगुच्छतः मूर्तिसमीपं गच्छन् एकः पिञ्छः आदित्येन दृष्टः ।
आदित्य ! अलं भीत्या न कोऽपि विपत्तिः भवतः ।
यावत् तस्य वचनं न समाप्तं ततः पूर्वम् एव तत्र अपूर्वः तेजः प्रसृतम् ।


पवित्रात्मनः वचनस्य समाप्तेः अनन्तरं सः पिञ्छः महाकारतां गतः । आदित्यः महाश्चर्येण एतत्सर्वम् अपश्यत् ।
अनुवर्तते




# चित्रशीर्षिकास्पर्धा





**उपरितनं चित्रद्वयं दृष्ट्वा परस्परसम्बन्धिवाक्यद्वयेन चित्रशीर्षिकां किं भवन्तः प्रेषयितुं शक्नुयुः ?**

समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया -

**चन्दमामा (संस्कृतम्) 'अक्षरम्' ८ उपमार्गः, गिरिनगरम्, बेङ्गलूरु - ५६००८५**

युक्ता शीर्षिका एतन्मासस्य २५ तः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू. १००/- पुरस्काररूपेण दास्यन्ते ।

पुरस्कृता शीर्षिका मासद्वयानन्तरं प्रकाशयिष्यते ।

## अभिनन्दनानि

**'सप्टेम्बर्'मासीयस्पर्धाशीर्षिकाप्रेषकः -**
**श्री अनन्त हेब्बारः**
**हरिहरपुरम्, कोप्पा ता.**
**चिक्कमगलूरु जि. - ५७७ १२०**
**महाराष्ट्रम्**

**पुरस्कृतशीर्षिका**





**सेतोः उपरि अहं बाला ।**
**मम उपरि स्नेहसेतुः ॥**


**चन्दमामायाः वार्षिकं ग्राहकशुल्कं -**

**भारते रू. १२० - ००**

Payment in favour of CHANDAMAMA INDIA LIMITED
No. 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097

Printed and Published by B. Viswanatha Reddi at B.N.K. Press Pvt. Ltd., Chennai - 600 026 on behalf of Chandamama India Limited, No. 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097. Editor : Viswam

